अभेद इति पक्षे, मुक्तेः पूर्वं भेदाभेदाविति पक्षेपि मुक्तेऽभेदांशमादाय संसारिणि चातिव्याप्तेः । तृतीयेऽपि सत्यं कर्तृत्वमसंभवि । असत्यं तु प्रधानादावतिव्याप्तम् । सिद्धांतिनोऽनिष्टं च । एतदेव पक्षत्रयमभिप्रेत्य टीकायां 'जगत्कारणत्वादीश्वरैकनिष्ठं न संभवती'त्युक्तम् । एवं च 'उभयगतविरुद्धधर्मत्यागेने'ति टीकावाक्य उपरितनो वाशब्दोऽनुषंजनीयः ।

[ यद्वा तत्राद्यद्वितीययोः 'उभयगतविरुद्धर्मत्यागेने'तिटीकायां ब्रह्मणः सर्वकर्तृत्वं जीवस्य तु तन्नेति व्यवस्थात्याग एवाभिप्रेतः । न तु मिथ्यावादिरीत्योभयत्र विशिष्टरूपत्यागः । तृतीये तु 'जीवेश्वरसालक्षण्यग्रहणेन वा ईश्वरस्य जीवसालक्षण्यग्रहणेन वा' इति टीकायामन्यतरपरिशेषमात्रमभिप्रेतम् । न त्वेकगतधर्मत्यागः ।

पूर्वपक्षोपसंहारटीकायां 'परमार्थत इत्युक्तिरपि तात्त्विकाभेदेनाव्यवस्था चेत्काल्पनिकभेदेन व्यवस्था किं न स्यादिति शंकायां परमार्थतो ब्रह्मैव कारणं न तु जीव इति सिद्धांतहानिरिति समाधातुम् । न तु मिथ्यावादिप्रक्रियया व्यवहारतो ब्रह्मैव कर्तृ न जीव इति व्यवस्थासिद्धावपि परमार्थतः सा न सिध्यतीति वक्तुम् । प्रस्तुतानुपयोगित्वात् । सुधायां तु प्रत्यक्षस्य प्राबल्याद्ब्रह्मणः प्रत्यक्षसिद्धासर्वकर्तृजीवसालक्षण्यमेव वक्तव्यमित्यसंभव एव निर्धारितः ।

सिद्धांतमाह ॥ नञध्याहारेणेत्यादिना ॥ अयं भावः ।

वाक्यांतरविरोधाच्च पूर्वापरविरोधतः ।
उपपत्तिविरोधाच्च नैव युक्तं मतत्रयम् ॥

उक्तं द्विविधं पक्षत्रयमपि मुक्तावभेदसापेक्षम् । स एव त्वसिद्धः । 'एकीभवंती'तिश्रुतेर्भाष्ये 'यथोदक'मिति श्रुत्यंतरादिविरोधोक्तेः । न्यायविवरणे च 'निरंजनः परमं साम्य'मिति पूर्ववाक्यविरोधस्य, 'परात्परं पुरुषमुपैति दिव्य'मित्युत्तरवाक्यविरोधस्य चोक्तेः अभेदपरत्वे च परेणाव्ययेनेति तृतीया स्यान्न तु सप्तमी । तथा 'सायं गोष्ठे गाव एकीभवंती'तिवत् स्थानैक्यस्यैव प्रतीतेः । तथा 'कर्माणि विज्ञान-

मयश्च आत्मे'ति पूर्ववाक्यस्थकर्मशब्दविरोधः । कर्मणां ब्रह्मणैक्यायोगादित्यादिबाधकानां च ग्रंथांतर उक्तेः । भेदाभेदपक्षेऽपि पूर्वमप्यभेदस्य विद्यमानत्वेनाऽद्यांत्यपक्षयोः च्विप्रत्ययस्य चायोगात् मध्यांत्यपक्षयोः 'नान्यदन्यत्र'मित्यनुव्याख्यानोक्तोपपत्तिविरोधाच्चान्यपरत्वात् । किञ्च

भिन्ननद्यब्धिदृष्टांतं वदंतीयं श्रुतिः स्वयम् ।
गौणार्थपरतां स्वस्या आचष्टे स्पष्टमेव नः ॥

श्रूयते हि 'एकीभवंती'त्यस्यानंतरमेव 'यथा नद्यः स्यंदमानाः समुद्रायणाः समुद्रं प्राप्यास्तं गच्छंती'ति भिन्ननदीसमुद्रदृष्टांतः । एवं च—

रथ्याजलं विष्णुपदीजलेनैकत्वमागतम् ।
इतस्ततो गता गावः सायमेकत्वमागताः ॥
एकीभूता तु सा सेना पांडवानभ्यवर्तत ।
इत्यादिवद्धवेदेकीभवंतीत्यादिवेदवाक् ॥

न च जलस्य जलांतरमेलनेनैक्यम् । 'तादृगेवेति'भाष्योक्तसावधारणश्रुत्या, 'यतो वृद्धिः प्रदृश्यत' इति सयुक्तिकस्मृत्या च विरोधात् । किञ्च

'मानभेदात्स्पर्शरसपूर्वभेदाच्च नीरयोः ।
मेलनेप्यभिधानास्ति यथैव क्षीरनीरयोः ॥'

न केवलं 'यतो वृद्धि'रिति स्मृत्युक्तं परिमाणभेदमात्रम् । किं तु शीतोष्णयोर्मधुरोषरयोस्संगतसरित्संबंधिजलयोः मेलने स्पर्शादिभेदोऽपि दृश्यते । अन्यथा हंसेन विविच्यमानयोः क्षीरनीरयोरप्यभेदः स्यात् । द्रुतस्वर्णताम्रयोर्मेलनेनाभेदे तत्कार्ये पणादौ केवलस्वर्णादिकार्यपणान्मूल्यादिभेदश्च न स्यात् । क्षीरे सिक्ता सुरा च क्षीरं स्यात् । प्रसिद्धश्च लोके संगतानां कृष्णादिसप्तनदीजलानां गंगादिसहस्रनदीजलानां च पुनः प्रत्येकं समुद्रसंगमार्थं विभक्तानां विलक्षणपूर्वरूपरसादिमत्तया भेदः । किञ्च 'अवस्थितेरिति काशकृत्स्न' इति सूत्रे भामत्या

मेव 'का पुनर्नद्यभिमताऽऽयुष्मतः। किं पाथःपरमाणव उतैषां संस्थानभेद आहोस्वित् तदारब्धावयवी। तत्र संस्थानभेदस्य वा अवयविनो वा समुद्रनिवेशे विनाशात्कस्य समुद्रेणैकता। नदीपाथःपरमाणूनां तु समुद्रपाथःपरमाणुभ्यः पूर्वावस्थितेभ्यो भेद एव। नाभेदः। एवं समुद्रादपि भेद एवे'त्यादिना नदीसमुद्रयोरभेदो निरस्तः। एवं च—

माषादिवच्च राश्यादौ सभादौ ब्राह्मणादिवत्।
जले जलांतरस्यापि संश्लेषो न त्वभिन्नता॥

द्रवद्रव्यत्वेनान्योन्यं व्यामिश्रणात्तु भेदाप्रतीतिरिति।

यदुक्तं परैः—ब्रह्मण उपादानत्वे भोक्तुः शरीरस्य भोग्यत्वापत्तेर्भोग्यस्य च शब्दादेर्भोक्तृत्वापत्तेस्तयोरविभागः स्यात्। द्वयोरपि परमकारणब्रह्मणोऽनन्यत्वादिति प्राप्ते, मैवं। एकसमुद्रकार्याणां फेनतरंगादीनामिव विभागोपपत्तेरिति सिद्धांत इति। तन्न। विवर्तसिद्धांते सांकर्यशंकाऽनुदयात्। किं च पूर्वपक्षिणा किं कार्याणां चेतनाचेतनत्वरूपेण विभागो न स्यादित्यापाद्यते किं वा येन केनचिद्रूपेण। नाद्यः। चेतनस्यानादित्वेन कार्ये तद्विभागाभावेनेष्टापत्तेः। ननु चेतनस्यानादित्वेपि ब्रह्माभेदाद्ब्रह्मकार्यत्वेन ब्रह्माभिन्नं यज्जडं तद्रूपत्वापत्तिरिति चेन्न। 'दृश्यते तु' इत्यतीताधिकरणस्थसूत्रेणैव जडोपादानत्वेऽपि ब्रह्मणः चेतनत्वाहानेरुक्तत्वेन ब्रह्माभेदेन जीवस्य जडत्वाप्राप्तेः। नांत्यः। एकमहासुवर्णपिंडकार्याणां कटकमकुटाद्यवस्थानां भेदस्यैव दर्शनेन ब्रह्मकार्याणामप्याकाशवाय्वादीनां भेदसंभवात्। सुवर्णपिंडं सावयवं ब्रह्म तु निरवयवमिति चेत्तर्हि त्वन्मते 'कृत्स्नप्रसक्ति'रिति सूत्र इव निरवयवस्य ब्रह्मणो युगपदनेकद्रव्योपादानत्वं न युक्तमिति पूर्वपक्षयितव्यम्। न तु कार्याणां विभागो न युक्त इति। तस्मान्न पूर्वपक्षोदयः। सिद्धांतोप्ययुक्तः। विवर्तवादे फेनतरंगादिदृष्टांतोक्तययुक्तेः। फेनतरंगादीनां भिन्नानेकजलावयवोपादानकत्वेनैकोपादानकत्वाभावाच्च।

केचित्तु ब्रह्मणः शरीरित्वे जीववद्दुःखादिभोक्तृत्वापत्तेरविभागः स्यादिति शंकानिरासार्थमिदं सूत्रमित्याहुः। तन्न। अस्माद्रीत्या भोक्तुः

जीवस्य ब्रह्मत्वापत्तेरित्यल्पाध्याहारेणोपपत्तौ ब्रह्मणः शरीरित्व इत्यापादकाध्याहारस्य, आपाद्येऽपि दुःखादिपदाध्याहारस्य, भोक्तृशब्दे भावप्रधानतायाश्च कल्प्यत्वात् । अस्याः शंकायाः 'संभोगप्राप्ति'रित्यत्रैव निरस्तत्वाच्च ।

ननु तत्र शरीरांतरावस्थानमात्रप्रयुक्तभोक्तृत्वाऽशंकाया निरासः । इह तु शरीरस्वामित्वप्रयुक्ताया इति चेन्न । तथापि त्वया तत्र 'न हि शरीरांतरवर्तित्वमेव सुखदुःखहेतुः । अपि तु पुण्यपापरूपकर्मवशत्वं । तत्त्वपहतपाप्मनः परमात्मनो न संभवती'त्युक्तत्वात् । अत्र च 'न हि जीवस्य शरीरधातुसाम्यवैषम्यनिमित्तसुखदुःखभोक्तृत्वं सशरीरत्वकृतम् । अपि तु पुण्यपापरूपकर्मकृतम् । अपहतपाप्मनस्तु परमात्मनः स्थूलसूक्ष्मरूपकृत्स्नजगच्छरीरत्वेऽपि कर्मसंबंधगंधो नास्ती'त्युक्तत्वात् परिहाराभेदाभावात् । अतिदेशत्वे तु तदानंतर्यं स्यात् । नन्वत्रोक्तं सुखदुःखादेः कर्मोपाधिकत्वं स्वीकृत्य सुखदुःखादिरहितस्यापीशस्य सन्निधानप्रयुक्तायाः जीवगतदुःखादिभोक्तृताशंकायास्तत्र निरास इति चेत्, तत्र शंकितं भोक्तृत्वं किं स्वगतत्वेनान्यगतदुःखाद्यनुसंधातृत्वं किं वा तत्साक्षात्कारित्वमात्रम् । नाद्यः । जीवस्याप्यन्यगतदुःखादौ स्वगतत्वभ्रांतेरभावेन तदापादनायोगात् । नांत्यः । इष्टापत्तेरिति ॥

॥ इति भोक्त्रधिकरणम् ॥ ५ ॥

---

## अथ आरंभणाधिकरणम्

## ॥ ॐ तदनन्यत्वमारंभणशब्दादिभ्यः ॐ ॥

अत्र बहुयुक्तिविरोधः परिह्रियते । तत्र च बहुत्वं, महदादिकं कर्त्रन्यस्वतन्त्रकारणसापेक्षम् । सृष्टत्वात् । घटवत् । तत्सृष्टिस्तत्सापेक्षा । सृष्टित्वात् । घटसृष्टिवदिति प्रयोगभेदमात्रान्न भवति । किं तु महदादिसृष्टिः कर्त्रनधीनसत्ताकाधिष्ठानसापेक्षा । तथा तदनधीनशक्ति-

काधिष्ठानसापेक्षा । तथोक्तरूपकरणसापेक्षा । सृष्टित्वात् । एवं स्थित्यादिरपीति प्रमेयभेदादिति नातिप्रसङ्गः । पूर्वत्रेश्वरस्य विश्वकर्तृत्वमेव नेति शंका परास्ता। अत्र तु श्रुतिसिद्धं तदुपेत्य स्वानधीनसत्तादियुक्तसाधनसापेक्षं तदिति शंका निरस्यत इति सङ्गतिः । अत्र जन्मादिसूत्रे विवक्षितं ब्रह्मणः स्वतन्त्रसाधनांतरनिरपेक्षकर्तृत्वं युक्तिविरुद्धमुत नेति चिन्ता । तदर्थं 'किंस्विदासीदधिष्ठानमारंभण'मित्यत्र किंशब्दः किं परिहाराध्याहारेण प्रश्नार्थः किं वा तदनध्याहारेणाक्षेपार्थ इति । तदर्थं 'अद्भ्यस्संभूत'इत्यादिश्रुतिः किं स्वतन्त्रसाधनांतरपरोत परतंत्रसाधनांतरपरेति तदर्थं कर्तुः स्वतंत्रसाधनापेक्षा किं कर्तृत्वप्रयुक्तोताशक्तिप्रयुक्तेति ।

पूर्वपक्षमाह । स्वतंत्रेति । अयं भावः । उक्तानुमानैरीशोपि स्वतंत्रसाधनापेक्षः । यदि चेशत्वात्तदनपेक्षा तर्हि तत एव स्वाधीनसत्ताकमप्यांतरं ज्ञानेच्छादिकं बाह्यं च कालकर्मप्रधानादिसाधनं नापेक्षेत । 'किंस्विदासी'दिति वाक्यं तु 'अद्भ्यः संभूत' इत्यादिभिः स्वतंत्रसाधनोक्तेस्तदविरोधाय परिहाराध्याहारेण प्रश्नो वाऽस्मदादेरिव सर्गानंतरभाविसाधनं नेत्येवं परं वा। यद्यपि 'अद्भ्यः संभूत' इत्यादौ साधनांतरमेवोक्तम् । न तु तस्य स्वातन्त्र्यम् । तथापि पारतन्त्र्यानुक्तौ स्वातन्त्र्यं स्वतः प्राप्तम् । लोके स्वतन्त्रसाधनापेक्षत्वे च कर्तृत्वमेव तन्त्रम् । लाघवात् । न त्वशक्तकर्तृत्वं गौरवात् । सर्वस्येशाधीनत्वश्रुतिश्च तत्सृष्टविषया। न तु सृष्ट्युपकरणविषया । अन्यथा साधनादिकमीशेन साधनांतरेण साध्यम् । तदप्यन्येनेत्यनवस्थेति ।

सिद्धान्तमाह । सिद्धान्तयदिति । अयं भावः ।

स्वतन्त्रसाधनापेक्षा लोकेऽशक्तिनिबंधना ।
ईश्वरस्य त्वसामर्थ्यं न कुत्रापीश्वरत्वतः ॥
द्रव्यस्य कर्मकालादेः श्रूयते चेशतन्त्रता ।
नानाशिल्पेषु निपुणः साधनं स्वयमेव हि ॥
संपाद्यते न कार्याणि कुर्वन् लोकेऽपि दृश्यते ।
स्वाधीनसाधनादानं त्वीशस्य न विरुध्यते ॥

प्रमितत्वाच्च लीलात्वादीशत्वाघातुकत्वतः ।
लीलया दंडमालंब्य गच्छन् किं पंगुतां व्रजेत् ॥

अनादिसाधनानामपीशाधीनत्वान्नानवस्था । साधनांतरस्य च 'अद्भ्यः संभूत' इत्यादि भाष्योदाहृतश्रुतिसिद्धत्वान्न तन्मात्राक्षेपः । किं तु स्वतन्त्रसाधनाक्षेप एवेति । बह्वित्युक्तमिति । 'बहुसाधने'तिभाष्ये साधनस्य बहुत्वं ज्ञानेच्छाद्यन्यदंडादिस्थानीयसाधनबहुत्वं विवक्षितमिति भावः । ईश्वरोपि मुक्त उच्यत इति ॥ अद्वैतिमते मुक्तेश्वरयोरभेदात् । 'अजोन्य' इति श्रुत्यैव ब्रह्मणः संसारिभ्यो भेदोऽपि सिद्ध इत्यर्थः ॥ श्रुतियुक्तिभ्यामिति ॥ प्राक्केवला युक्तिः श्रुतिश्च शंकिता । अत्र तु श्रुतिसहिता युक्तिरितिभेदः । साक्षिप्रत्यक्षस्य सर्वस्मात्प्रबलत्वेऽपि प्रत्यक्षमात्रस्य श्रुतितोदुर्बलत्वात्पूर्वत्रारुच्या दृष्टशब्दं प्रकारांतरेण व्याचष्टे । दृष्टमितीति ॥ भाष्ये 'अनुमाद्या' इत्यत्र अद्भ्यशब्दोऽनुमाविशेषार्थापत्त्यादिपरः । यद्यपि 'किंस्विदासी'दिति श्रुतावधिष्ठानं प्रथममुक्तम् । तथाप्यारंभणशब्दार्थस्य करणस्य साधनेष्वतिशयितत्वात्सूत्र आरंभणशब्दः । अनेन च प्रतीकतया 'किंस्विदासी'दित्यारंभणाक्षेपवाक्यस्य गृहीतत्वात् साधनांतराभावसिद्धिरिति सुधायामेवोक्तम् । 'आरंभणशब्दादिभ्यः' इत्यत्रादिशब्देनेश्वरस्य स्वतन्त्रसाधनानपेक्षत्वे स्वातन्त्र्यादिरूपयुक्तिरुक्ता । 'युक्ते-'रित्यत्र तु साधनं विना कर्तुं शक्तस्याऽपि स्वेच्छया लीलया स्वाधीनसाधनांतरोपादानमैश्वर्याविरोधित्वाद्युक्तमित्युक्तम् । 'पटवच्चे'त्यत्र तु साधनमात्रमस्तीत्यत्र सृष्टित्वादियुक्तिरुक्ता । 'यथा प्राणादि'रित्यत्र तु साधनं स्वतन्त्रं साधनत्वादिति पूर्वपक्षयुक्तेर्बाधाद्युक्तमिति न पुनरुक्तिः । 'सत्वाच्चावरस्ये'त्यत्र तु स्वतन्त्रसाधनास्तित्वे शंकिताया 'अद्भ्यः संभूत' इत्यादिश्रुतेः परतन्त्रसाधनपरत्वम् । 'काल आसीत्' इत्यादिश्रुत्यंतरसंवादेनोक्तम् । शब्दांतराच्चे'त्यत्र तु परतन्त्रमपि साधनं मास्त्विति शंकानिरासाय तदस्तित्वे 'अद्भ्य' इत्यादिश्रुतिरुक्तेति भेदः । अनुव्याख्याने तु

'शक्तोऽपि भगवान्विष्णुरकर्तुं कर्तुमन्यथा ।
स्वभिन्नं कारणाभिन्नं भिन्नं विश्वं करोत्यज ॥'

इति सोपपत्तिकाश्रुतिरपि शब्दांतरशब्दार्थ इत्युक्तम् । तथानुव्याख्याने न केवलं भाष्यरीत्या 'तम आसी 'दिति वाक्शेषान्यथानुपपत्त्या 'नासदासी' दित्यादेः स्वतन्त्रसाधननिषेधपरता । किं तु 'न पर' इति साक्षात् स्वातन्त्र्यनिषेधाच्चेति वक्तुं 'तस्माद्धान्यन्न परः किं च नासे 'ति वाक्यमपि सौत्रवाक्यशेषशब्दार्थ इत्युक्तम् । अन्ये तु पूर्वत्राभ्युपेत्य व्यावहारिकं भेदं 'स्याल्लोकव 'दित्युक्तम् । अत्र तु तत्त्वतः कार्यस्य विश्वस्य कारणब्रह्मणोऽनन्यत्वं 'वाचारंभणं विकारो नामधेयम् । 'इदं सर्वं यदयमात्मे 'त्यादिश्रुतेरित्युच्यत इत्याहुः । तत्र न तावद्ब्रह्माभेदस्तदनन्यत्वम् । अनृतस्य विश्वस्य सत्यब्रह्माभेदायोगात् । अनंगीकाराच्च । अज्ञानविशिष्टेनोपादानेनाभेदोस्तीति चेन्न । मुमुक्षुज्ञेयशुद्धब्रह्मज्ञानादेव सर्वविज्ञानार्थं शुद्धेनैवाभेदस्य वक्तव्यत्वात् । अन्यथाऽविद्यापि 'येनाश्रुतं श्रुत 'मित्यादिवाक्योक्तज्ञेयकोटिनिविष्टा स्यात् । नापि 'न खल्वनन्यत्वमित्यभेदं ब्रूमः। किं तु भेदं व्यासेधाम ' इति भामत्युक्तरीत्या ततो भेदाभावमात्रं तदनन्यत्वम् । भेदाभावेऽभेदध्रौव्यात् । भेदाभावे सत्यानृतव्यवस्था योगाच्च । अभेदाभावेन व्यवस्थायां तेनैवैकविज्ञानेन सर्वविज्ञानाभावोऽपिस्यात् । यदि चैकविज्ञानेन सर्वविज्ञानानुपपत्त्या भेदाभावोव्यवस्थानुपपत्त्या चाभेदाभावः कल्प्येत तर्हि तदुभयानुपपत्त्या लाघवाय तथा 'इदं सर्वं यदयमात्मा नेति नेती'त्यादिसामानाधिकरण्यश्रुतिभेदश्रुत्योर्मृत्पिंडादिदृष्टांतस्य च स्वारस्याय भेदाभेदावेव किं न कल्प्येते । ब्रह्मण एकरसत्वश्रुतिरप्यनेकरसात् प्रपंचाद्भेदाभावेप्यभेदाभावमात्रेणेवाऽभेदेऽपि भेदेनैवोपपन्नास्तु । यथा च सत्यस्यानृताभेदो न युक्तस्तथा ततो भेदाभावोऽपि । नापि ब्रह्मव्यतिरेकेणासत्त्वं तदनन्यत्वम् । विशेषनिषेधस्य शेषाभ्यनुज्ञानार्थत्वेनानंदादिवज्जीवचैतन्यवच्च ब्रह्मात्मकत्वापातात् । ब्रह्मण्यारोपितत्वं तु न तदनन्यत्वशब्दार्थः। शुक्त्यारोपिते रूप्ये तदनन्यशब्दाप्रयोगात्। प्रातिभासिकव्यावहारिकयोर्व्यावहारिकपारमार्थिकाभ्यामन्यत्वाभावेऽनिर्वाच्यत्वासिद्धेश्च । [रूप्यमिदं नेति तदन्यशब्दस्यैव प्रयोगाच्च ।] एकविज्ञानेन सर्वविज्ञानायोगाच्च । मृत्पिंडादिदृष्टांतानुपपत्तेश्च ॥

कथं हि ब्रह्मविज्ञानाद्विज्ञातं सकलं भवेत् ।
न हि शुक्तिस्वरूपस्य विज्ञानाद्रजतज्ञता ॥
प्रत्युत—शुक्तितत्त्वापरिज्ञानाद्यथैव रजतज्ञता ।
ब्रह्मतत्त्वापरिज्ञानात्तथा सर्वज्ञतोचिता ॥

अत्रोक्तं भामत्यां—रज्ज्वां ज्ञातायां भुजंगतत्त्वं ज्ञातं भवति। सा हि तस्य तत्त्वम् । एवं च ब्रह्मज्ञानात् सर्वं तत्त्वतो ज्ञातं भवतीति । तन्न । एवं हि ब्रह्मज्ञानेन ब्रह्मैव ज्ञातं भवतीत्यर्थः स्यात् । तच्चायुक्तम् । स्वस्य स्वहेतुत्वायोगात् । 'येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञात'मिति श्रुतिगताश्रुतादिपदायोगाच्च । किं चासाधारणं स्वरूपमसाधारणधर्मो वा तत्त्वम् । न तु भ्रमाधिष्ठानम् । तथात्वे चानन्दो ब्रह्मणो रज्जुत्वं च रज्जोस्तत्त्वं न स्यात् । न च रज्जू रज्जुज्ञाननिवर्त्यस्य सर्पस्य स्वरूपं धर्मो वा। न च परस्परभिन्नानेकारोप्यानुगतमधिष्ठानमेकैकस्यारोपितस्यासाधारणम् । न चानारोपितमित्येतावता ततोन्यत्तस्य तत्त्वं भवति । स्वीकृतं च त्वयापि सर्पस्य रज्जुव्यतिरेकेणासत्त्वेन ततोऽन्यत्वाभावेऽपि रज्जोः सर्पव्यतिरेकेण सत्त्वेन ततोन्यत्वम् ।

[किं च यदि रज्जुः सर्पस्य तत्त्वं तर्हि रज्जुज्ञः सर्पतत्त्वज्ञइत्युच्येत] किंचैवं रज्ज्वामयं सर्प इति धीरानंदे ब्रह्मधीरिव च प्रमा स्यात्। तत्तत्वेतद्धीत्वात् । रज्जुज्ञानेन सर्पभ्रमनिवृत्तिस्त्वधिष्ठानतत्त्वज्ञानस्य तदज्ञाननिमित्तकभ्रमविरोधित्वात् । न च घटादेर्मृदादावारोपितत्वात्तद्दृष्टांतो युक्त इति वाच्यम् । मृत्तत्त्वज्ञानेऽपि घटाद्यनिवृत्तेः । यद्यपि तार्किकमत इव मृदारब्धं द्रव्यांतरं नास्ति । तथापि कारकव्यापारसाध्यो जलाहरणादिसमर्थो व्यावहारिको मृदादितुल्योऽवस्थाविशेषरूपो घटशब्दार्थः त्वन्मतेऽप्यस्ति । तत्त्वतस्तु न मृदप्यस्ति । किं च—

यदि मृन्मात्रविज्ञानाद्विज्ञातं स्याद्घटादिकम् ।
मृत्त्वं निश्चित्य न पुनः संशयीत घटादिके ॥

एतेन यदुक्तं भामत्यां—मृज्ज्ञाने घटादयः तत्त्वतो ज्ञाता भवंति। मृदेव हि घटादीनां तत्त्वमिति तन्निरस्तम् । मृत्तत्वज्ञानेऽपि तत्संस्थानविशेषरूप-

घटत्वाज्ञानेन घटस्तत्त्वतो न ज्ञात इति व्यवहारात् । घटे शरावत्वाद्यारोपानिवृत्तेश्च । अन्यथा जातिर्व्यक्तेस्तत्त्वं न स्यात् । अत्र स्वमत एकविज्ञानेन सर्वविज्ञानमन्यत्रोक्तमनुसंधेयम् । प्रकृत्यधिकरणादृश्यत्वाधिकरणाभ्यामस्य पुनरुक्तिश्च । अद्वैतिमतेऽत्रैवोभयत्रापि ब्रह्मविवर्तताया एवोक्तत्वात् । किं च त्वन्मते पूर्वत्र भेदोक्तेरत्र त्वभेदोक्तेर्विरोधः । न च प्रमाणयोः सूत्रयोर्विरोध एकस्यानृतविषयत्वेन परिहर्तुं युक्तः । किं च घटादेर्मृदनन्यत्वप्रतिपादक आरंभणशब्दो जगतो ब्रह्मानन्यत्वरूपे त्वदीयसाध्ये न साक्षाद्धेतुः । मम तु साक्षात् । किं चात्र मम 'सत्त्वाच्चावरस्ये'त्युत्तरसूत्रानुसारी स्वतन्त्रसाधनस्येत्यध्याहारः । तव तु तदननुसारी जगत इत्यध्याहारः । किं च वाचारंभणशब्दस्य समस्तपदत्वात्तदीयसूत्रादिशब्दार्थस्य 'इदं सर्वं यदयमात्मे'त्यादेरपि शब्दत्वाच्च सूत्रे वाचारंभणादिशब्देभ्य इति स्यात् । यच्चोक्तं भामत्यां भावशब्देन कारणस्य सत्ताज्ञानं च विवक्ष्यते । उपलब्धिशब्देनापि कार्यस्योपलब्धिः सत्ता च । एवं च कारणसत्त्व एव सत्त्वे सति कारणोपलब्धावेवोपलभ्यमानत्वात् कार्यस्य कारणानन्यत्वमिति द्वितीयसूत्रार्थः । प्रभोपलब्धावेवोपलभ्यमाने रूपादावव्यभिचारायाद्यं विशेषणम् । वह्निसत्त्व एव सति धूमादावव्यभिचाराय द्वितीयमिति । तन्न । भावशब्दोपलब्धिशब्दयोरावृत्तिः विभक्तिविपरिणामः कारणस्य कार्यस्येति पदद्वयाध्याहारश्चेत्यनेकदोषापातात् । मम तु 'उपलब्धे'रित्यस्य प्रसंगहेतुत्वमात्रं कल्प्यम् । कारणसत्त्व एव सत्त्वरूपस्य हेतुविशेषणस्य त्वदभिप्रेतानृतत्वरूपानन्यत्वविरोधित्वाच्च । शब्दैकसमधिगम्यनिर्विशेषचिन्मात्ररूपशुद्धस्य सर्वज्ञत्वादिविशिष्टस्य सगुणस्य च ब्रह्मणोऽनुपलब्धावेव प्रपंचोपलंभेन प्रस्तुतस्य ब्रह्मप्रपंचानन्यत्वस्यासिद्धेश्च । यच्चास्यैव सूत्रस्य भावाच्चोपलब्धेरिति पाठांतरमाश्रित्यातानवितानवंतस्तंतव एव पट इति प्रत्यक्षोपलब्धेर्भावाच्चेति व्याख्यानं तन्न । उपलब्धेरित्यस्य पंचम्यंतत्वेऽपि विवक्षितसिद्धेर्भावादित्यस्य वैयर्थ्यात् । कार्यकारणयोरभेदस्यैव सिद्ध्या पराभिमतप्रपंचानृतत्वासिद्धेश्च । यच्चोक्तमवरकालीनस्य कार्यस्य वियदादेः सदेव सोम्ये-

त्यादिश्रुत्योत्पत्तेः प्रागेव सत्त्वाच्च कारणादनन्यत्वमिति तृतीयार्थ इति तन्न। सत्त्वादित्यस्य त्वदभिप्रेतानृतत्वविरोधित्वात्। उत्पत्तेः प्रागेवेत्यस्याध्याहार्यत्वाच्च। द्वितीयसूत्रस्य तन्तुपटादिर्विषयस्तृतीयस्य तु ब्रह्मवियदादीति भिन्नविषयत्वेन चशब्दास्वारस्याच्च। [अवरशब्दे लक्षणापाताच्च] 'तत्तेजोऽसृजते'तिवाक्यशेषेण 'सदेवे'ति वाक्यस्य कारणपरत्वात्कार्यकारणाभेदस्य चाद्याप्यसिद्धेस्तेन कार्यसत्त्वासिद्धेश्च। यच्चोक्तं 'असदेवेदमग्र आसी'दिति व्यपदेशात्कार्यस्य प्रागसत्त्वमिति शंका चतुर्थे निरस्यत इति तन्न। अस्यापि वाक्यस्य 'तदसदेव सन्मनोकुरुते'तिवाक्यशेषात् कारणपरत्वेन कार्यासत्त्वाप्रापकत्वात्। न च कार्यकारणयोरनन्यत्वांगीकारेण कार्यासत्त्वशंकेति युक्तम्। कार्यसत्त्वस्याप्यनन्यत्वसिद्ध्यर्थत्वेनानन्यत्वांगीकारेणासत्त्वशंकाऽयोगात्। यच्चोक्तमसदकरणादियुक्तेः 'सदेवेत्यादिशब्दांतराच्च कार्यस्य प्रागुत्पत्तेः सत्त्वं कारणानन्यत्वं चेति पंचमार्थ इति तन्न। शब्दांतरादित्यस्य सत्त्वाच्चावरस्येत्यनेन गतार्थत्वात्। षष्ठसप्तमसूत्रोक्तौ तु संवेष्टितपटप्राणदृष्टांतौ न विवर्तवादिनः परस्यानुगुणौ। जगतो ब्रह्मणीव प्रसारणादेः पटादावनध्यस्तत्वात्। संवेष्टितप्रसारितपटादाविव निरवयवे ब्रह्मणि संकोचविकासयोरसंभवाच्च। मम मत इव प्रमेयविशेषाभावेन दृष्टांतद्वयस्य वैयर्थ्याच्च।

केचित्तु सूक्ष्माव्यक्तादिविशिष्टस्य कारणस्य ब्रह्मणः स्थूलमहदादिविशिष्टेन कार्येण ब्रह्मणाऽनन्यत्वमत्रोच्यत इत्याहुः। तन्न। शुद्धाचेतनात्मकस्य विशिष्टरूपकार्यगतस्य विशेषणांशस्य महदादेर्विशिष्टचेतनकार्यत्वाभावेन विशिष्टब्रह्माभेदाभावात् 'इदं सर्वं यदयमात्मा, सर्वं खल्विदं ब्रह्मे-' त्यादिश्रुत्यनिर्वाहात्। सर्वांतर्यामित्वादिनैव तन्निर्वाहे च किं विशिष्टाभेदव्युत्पादनेन। किं च विशिष्टस्य कार्यत्वे 'तत्सृष्ट्वा तदेवानुप्राविश-' दित्याद्ययुक्तम्। स्वविशिष्टे स्वानुप्रवेशायोगात्। यच्चोक्तं श्रुतौ 'वाचारंभण'मित्यत्रारभ्यते आलभ्यते स्पृश्यते इत्यारंभणं इति व्यस्तं पदम्। तथा च विकारो घटादिनामधेयं च वाचा वाक्पूर्वकजलाहरणादिव्यवहाराय मृद्द्रव्येण स्पृश्यते। एवं च मृद्द्रव्यमेव व्यवहाराय विका-

रादिभाग्भवतीति श्रुत्यर्थ इति तन्न । श्रुतौ वाक्प्रातिपदिके लक्षणाया, तृतीयाविभक्तौ चतुर्थ्यर्थतायाः, आरंभणशब्दे रलयोरभेदेनालभनार्थतायाः, नामधेयमित्यत्र चशब्दाध्याहारस्य, मृद्द्रव्येणेत्यस्याध्याहारस्य चायोगात् । मृद्द्रव्येण घटादेः स्पृश्यमानत्वोक्त्या तयोर्भेदस्यैवापाताच्च । यच्चोक्तम्—यद्यपि द्वितीये तृतीये च कार्यकारणाभेद इदं कुंडलं हिरण्यमिति प्रतीतिरेव प्रमाणीक्रियते । न तु तृतीयं ब्रह्मजगद्विषयम् । तथापि द्वितीये सोऽयमिति प्रत्यभिज्ञोक्ता । तृतीये त्वयं स इत्यभिज्ञेति वा, द्वितीय ऐक्यप्रतीतिरुक्ता । तृतीये त्वैक्यव्यवहार इति वा भेद इति । तन्न । उद्देश्यविधेयविनिमयादिमात्रेण सूत्रभेदेऽतिप्रसंगात् । सूत्राक्षरास्वारस्याच्च । न हि 'भावे चोपलब्धे'रित्यादिशब्दात् प्रत्यभिज्ञादिर्भाति । किञ्च मद्रीत्या सूत्राणां साक्षाद्ब्रह्मविषयत्वे संभवत्युभाभ्यामुक्तं लौकिककुंडलहिरण्यादिमात्रविषयत्वं न युक्तमिति ॥

॥ इति आरंभणाधिकरणम् ॥ ६ ॥

---

## अथ इतरव्यपदेशाधिकरणम्

## ॥ ॐ इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॐ ॥

अत्र श्रुत्यनुभवसंवादियुक्त्यविरोध उच्यते । जीवकर्तृत्वसाधकचेतनत्वादियुक्तिर्हि 'जीवाद्भवंति भूतानी'त्यादिश्रुत्या जीवकर्तृत्वानुभवेन च संवादिनी । अत्र जन्मादिसूत्रे विवक्षितं ब्रह्मण एव स्वतंत्रकर्तृत्वं युक्तिविरुद्धं न वा इति चिंता । तदर्थं जीवस्य स्वतंत्रकर्तृत्वसाधकचेतनत्वादियुक्तिः श्रुतिसंवादिनी न वेति । तदर्थं 'जीवद्भवंती'त्यादिश्रुतिः किं प्रत्यक्षानुसारात् । [विग्रहादिमतः कर्तुर्ब्रह्मणोऽनुपलब्धिबाधितत्वाच्च] जीवविषयोत [अप्राकृतविग्रहादिमत्यपि ब्रह्मण्यंतर्धानशक्तियोगात्पिशाचादेरिवानुपलब्धिबाधाद्यभावात् ] प्रत्यक्षाप्राप्तब्रह्मपरेति । यद्यपि समयप्राप्तं जीवकर्तृत्वं द्वितीयपादे 'अन्यथानुमितौ चे'त्यत्र निषेत्स्यते । यद्यपि च श्रुतिसंवादियुक्तिप्राप्तं जीवादिकर्तृत्वं 'एतेन

शिष्टा' इत्यत्र निषिद्धम् । तथापीह 'यथा प्राणादि'रिति पूर्वाधिकरणोक्तं प्राणादिजीवानामस्वतंत्रत्वमयुक्तम् । जीवकर्तृत्वस्यानुभवादित्यनुभवसंवादेनाधिकहेतुना पुनर्जीवमात्रविषयायां शंकायामनुभवस्य गतिं हिताकरणादिदोषांतरं च वक्तुमिदमिति न पुनरुक्तिः । अत एव सिद्धांते 'इतरव्यपदेशा'दिति सूत्रे पूर्वपक्ष्यभिप्रेता श्रुतिः, 'उपसंहार दर्शना'दित्यत्रानुभवः, 'अश्मादिव'दित्यत्र युक्तिश्च निरस्ता । अत्र घटादेर्जीवैककर्तृकत्वे तद्दृष्टांतेन महदाद्यपि तथेत्येकः पूर्वः पक्षः । द्वितीयस्तु महदादिरीशकर्तृको घटादिस्तु जीवैककर्तृक इति । अत्र च पक्षद्वये 'जीवस्यैव कर्तृत्वांगीकारे कल्पनालाघव'मिति पूर्वपक्षहेतुपरं यन्न्यायविवरण तस्य 'तथाही'त्यादिटीकायामाद्यपक्षमाश्रित्य ईश्वरोऽयोग्यश्चेत्कदापि प्रत्यक्षो न स्यात् । योग्यश्चेत् सदा सर्वत्र सत्त्वादिहेदानीमुपलभ्येत । न चाभिमानिदेवतासाम्यम् । ईश्वरस्याव्यक्तस्वभावांगीकारात् । तस्मादप्रामाणिकः ईश्वरस्तस्य घटादौ महदादौ च कर्तृत्वं कल्प्यम् । जीवस्य त्वदृष्टद्वारा महदादावपि कर्तृत्वं क्लृप्तम् । युक्तं चोपादानाद्यपरोक्षज्ञतिरहितस्यापि जीवस्य महदादिकर्तृत्वम् । चैत्रः शब्दं करोतीत्यादौ दर्शनादिति तात्पर्यमुक्तम् । सुधायां तु द्वितीयपक्षमाश्रित्य कुलालादीनां घटादिकर्तृत्वं तावदनुभवसिद्धम् । तत्रेश्वरस्यापि कर्तृत्वे गौरवमिति तात्पर्यमुक्तम् । यत्तु सुधायां 'न ह्यत्राधिकरणे पूर्वपक्षिणा महदादिसकलकार्यकर्तृत्वं जीवस्य शंकित'मित्युक्तं तत्राद्ये जीवस्य महदादिकर्तृत्वपक्षेऽनुभवविरोधः । न तु द्वितीये । किंतु तदानुकूल्यमेवेत्याद्येऽपरितोषमात्रमभिप्रेतम् । अत एवात्रापि टीकायामाद्येऽपरितोषात् 'यद्वे'त्यादिनाऽधिकरणांते द्वितीय उक्तः । न त्वाद्यः सुधायां सर्वथाऽनभिप्रेतः, तथात्वे 'देवादी'त्युत्तरसूत्र ईश्वरस्यादृश्यत्वोक्त्ययोगात् । अत्र चाद्ये आरंभणशब्दादिभ्य ईशस्य स्वतंत्रकर्तृत्वं चेत् 'न जीवात् कारणं पर'मित्यादिशब्दाज्जीवस्यापि तदस्तु । उक्तरीत्येशस्यैवाभावान्न जीवशब्दस्तत्पर इति पूर्वपक्षोत्थानात् संगतिः । द्वितीये तु पूर्वत्र कर्त्रंतररहिते महदादावीशस्य स्वतंत्रकर्तृत्व-

मुक्तमत्र तु कर्त्रंतरसहितेऽपि घटादौ तदुच्यत इति संगतिः। सिद्धांतमाह ॥ इतिप्राप्त इत्यादिना ॥ अयं भावः ॥

कर्तृत्वमात्रं जीवस्य ममापीष्टं घटादिषु।
अन्यानधीनकर्तृत्वे स्याद्धिताकरणादिकम् ॥
कथं न कुर्यात्प्रेक्षावान् स्वतंत्रस्स्वहितं सदा।
कथं च स्वाहितं कुर्यात्तथा च सकलो जनः ॥
पूर्णानंदश्च निर्दुःखः सर्वदैव प्रसज्यते।
कर्मकालादिकस्यापि जडत्वान्न स्वतंत्रता ॥
नैव बध्नाति पुरुषं स्वयं हि निगडादिकम्।
जीवस्ततो दारुयोषावदन्याधीनचेष्टितः ॥
चेतनोऽप्यस्वतंत्रोऽस्तु सूत्रप्रोतशुकादिवत्।
प्रत्यक्षं चास्वतंत्रत्वं मृतिसुप्त्युद्भवादिषु ॥
यत्रेशेच्छानुसारेण स्वस्यापीच्छोपजायते।
कार्योपसंहृतिं काकतालीयां तत्र वीक्ष्य तु ॥
देहादियंतुश्च हरेरगृहीत्वा स्वतो भिदाम्।
स्वतंत्रकर्तृतां स्वस्य मन्यते ह्यबुधो जनः ॥
चार्वाकस्य यथा देहे जडे स्वातंत्र्यधीस्तथा।
[यथैवात्मपराधीने देहे स्वातंत्र्यधीस्तथा]
जीवबिंबेश्वराधीने जीवे स्वातंत्र्यविभ्रमः ॥
आविर्भावतिरोभावौ शक्तियोगात्पिशाचवत्।
ईश्वरस्योपपद्येते सर्वत्रावस्थितस्य च ॥
गौरवं तन्न भाराय यत्प्रमाणस्य संमतम्।
न हि भाराय भवति कांक्षितं भूषणादिकम् ॥
प्रत्युत—प्रामाणिकेशकर्तृत्वत्यागादप्रमितस्य च।
जीवे तस्य स्वीकृतेश्च गौरवं पूर्वपक्षिणः ॥ इति

यत्त्वनुव्याख्याने कृत्स्नप्रसक्त्यादि शंकित्वाऽचिंत्येशशक्त्योपपत्तेर्न साम्यमित्युक्तं तदुत्तराधिकरणप्रमेयं शिष्यहितार्थमिहोक्तम्। इहैवा-

चिंत्यशक्त्युक्तौ पुनरुक्तरत्र पूर्वपक्षानुदयादिति सुधायामेवोक्तम्। 'इतरव्यपदेशा'दिति सूत्राक्षराणि योजयति ॥ जीवकर्तृत्वस्येत्यादिना। अयं भावः। सौत्रस्येतरशब्दस्य प्रस्तुतब्रह्मकर्तृत्वादितरजीवकर्तृत्वमर्थः। असद्व्यपदेशान्नेति चे'दितिसूत्राच्चेदित्यनुवर्तते। स च यदर्थः। यदि तद्योश्च नित्यसंबंधः। तथा च यदि जीवकर्तृत्वव्यपदेशाज्जीवः स्वतंत्रः कर्ता तर्हि हिताकरणादिदोषप्रसंग इति सूत्रार्थ इति॥

॥ इति इतरव्यपदेशाधिकरणम् ॥ ७ ॥

---

## अथ श्रुतिशब्दमूलाधिकरणम्

## ॥ ॐ श्रुतेस्तु शब्दमूलत्वात् ॐ ॥

अत्रानंशस्यापीशस्यैकदेशेन व्यापारेऽणीयस्त्वादियुक्तस्य च महीयस्त्वादौ व्याघात इति व्याघातपर्यवसायिप्रबलयुक्त्यविरोध उच्यते। पूर्वोक्तस्य जीवकर्तृत्वे कृत्स्नप्रसक्त्यदिदोषस्य ब्रह्मण्युद्धारात् संगतिः। अत्र पूर्वोक्तं विष्णोः सर्वकर्तृत्वं न युक्तमुत युक्तमिति चिंता। तदर्थं तस्य कर्तृत्वे कृत्स्नप्रसक्त्यादिदोषोस्त्युत नेति। तदर्थमन्यत्र युक्तिविरुद्धं ब्रह्मण्यपि तद्विरुद्धं न वेति। तदर्थं ब्रह्मणि तद्विरोधः किं तस्य तर्कागोचरत्वाघटितघटनाशक्तिभ्यां सुपरिहर उत नेति। तदर्थं ताभ्यां तत्परिहारे किमतिप्रसंग उत नेति। तदर्थं सोऽपि किमप्रमिते किं वा प्रमित एवेति। पूर्वपक्षमाह॥ न युक्तमिति॥ अयं भावः। ईश्वरस्याल्पकार्येऽपि सर्वशक्त्या प्रवृत्तौ प्रेक्षावत्त्वं न स्यात्। एकदेशेन प्रवृत्तिस्तु विरुद्धा। भिन्नांशाभावात्। नापि विशेषबलादविरोधः। जीवेऽपीश्वरमनपेक्ष्य विशेषबलादेवाविरोधापातात्। ईश्वर ईश इति पर्यायशब्दवाच्ये निर्विशेषाभिन्ने विशेषाभावेन तत्राणुत्वमहत्त्वादेर्विरोधापाताच्च। प्रमितत्वादविरोध इति तु जीवेऽपि समम्। प्रमाणस्य ज्ञापकत्वेनाविरोधाकारकत्वाच्च। न चाल्पकार्ये नांशस्य प्रवृत्तिः। नापि

गुरुकार्ये कृत्स्नस्य। किं तु प्रयत्नतारतम्यमात्रमिति वाच्यम्। जीवेऽपि साम्यात्। यदि चास्माकं तृणादान एकदेशस्य गुरुतरभारादाने च कृत्स्नस्य प्रवृत्तिरनुभवसिद्धा तर्हीशेऽपि सा जीवांतर इवानुमानसिद्धा। ईश्वरस्यातर्क्यत्वान्न तत्र तर्कप्रसर इति चेन्न। शास्त्रयोनौ ब्रह्मण्यसाधकस्यापि तर्कस्य बाधकत्वात्। अन्यथा मीमांसावैयर्थ्यम्। यदि चेश्वरस्याचिंत्यशक्तित्वादविरोधः तर्हीश्वर उपादानं [अप्राकृतविग्रहं] ज्ञानेच्छादिकं च विनैव सृजेत्। स्वयमेव वोपादानं स्यात्। शून्यं च सत्कुर्यात्। मुक्तांश्च बध्नीयादिति बहुविप्लवः स्यादिति। सिद्धांतमाह॥ सिद्धांतयदिति॥ अयं भावः॥

श्रोत्रादिगम्यशब्दादौ चक्षुरादि न साधकम्।
न चापि बाधकं यद्वत् शुष्कतर्कस्तथेश्वरे॥

शुष्कतर्क इति विशेषणान्नातिप्रसंगः। अत एव भाष्ये 'यद्वाक्योक्तं न तद्युक्तिर्विरोद्धुं शक्नुयात्क्वचित्। विरोधवाक्ययोः क्वापि किंचित् साहाय्यकारण'मिति स्मृतिरुदाहृता। किञ्च

ब्रह्मावासत्वसूक्ष्मत्वे अप्यन्यत्र विरोधिनी।
विश्वकर्मादिसामर्थ्याद्दृश्यते पुष्करादिषु॥
मनुष्यादावदृष्टं च दृश्यते देवतादिषु।
अस्मदादावदृष्टं च दृश्यते मनुजांतरे॥
ज्ञातुं न पार्यते यस्य पारमप्यस्मदादिभिः।
स एवांभोनिधिः कुंभजन्मना चुलकीकृतः॥
विरुद्धमेवमन्यत्रापीश्वरे न विरुध्यते।
स विचित्राचिंत्यशक्त्या दुर्घटं घटयेद्यतः॥

यत्प्रमितं विरुद्धं च तस्यैवाचिंत्यशक्त्या निर्वाह इति नातिप्रसंगः। जीवस्य त्वचिंत्याद्भुतशक्तौ न मानमस्ति। प्रत्युत तदभाव एव प्रत्यक्षादिसिद्ध इति वैषम्यमिति। अत्र पूर्वपक्षयुक्तीनां प्रबलत्वादेव सिद्धांते तदुद्धारार्थं 'श्रुतेस्त्वि'ति सूत्रे श्रुतेरित्यनेनेश्वरस्य विरुद्धगुणवत्त्वे श्रुतिमेवोक्त्वा 'शब्दमूलत्वा'दित्यनेनेश्वरस्य तर्कागोचरतां 'आत्मनी'ति

'सर्वोपेते'ति च सूत्राभ्यामघटितघटनाशक्तिं चोक्त्वा 'स्वपक्षदोषाच्चे'ति सूत्रेण जीवे तदभाव उक्तः। यदुक्तमुभाभ्यां—इतरे'त्यादिसूत्रत्रयमेकमधिकरणम्। तत्र इतरस्य जीवस्य ब्रह्मत्वव्यपदेशात् चेद्ब्रह्म जीवान् सृष्ट्यादिना दुःखयेत्स्वात्मानमेव दुःखयेदिति 'हिताकरणादिदोष प्रसक्ति'रित्याद्येन पूर्वपक्षयित्वा श्रुतिषु भेदस्यापि व्यपदेशान्न दोष इति द्वितीयादिना सिद्धांतितम्। तत्राभेदः सत्यो भेदस्त्वसत्य इत्यन्येषां मतम्। केषांचित्तु भेदः सत्योऽभेदव्यपदेशस्तु शरीरशरीरिभावनिमित्तकः। जीवो हि ब्रह्मणः शरीरमिति भेद इति। तत्राद्ये सूत्रे 'इतरव्यदेपशा'दित्यस्यैक्यव्यपदेशादित्यर्थो विरुद्धः। द्वितीयेऽपि भेदमात्रस्य वक्तव्यत्वेन सूत्रेऽधिकशब्दास्वारस्यम्। केषांचित्पक्षे 'अवस्थितेरिति काशकृत्स्न' इत्यनेन पुनरुक्तिः। तत्राप्यभेदश्रुतिः शरीरशरीरिभावविषयेत्युक्तत्वात्। अन्येषां पक्षे च कथं ब्रह्मणो दुःखाद्यनर्थाभावः? किं विशिष्टस्य मिथ्याभूतस्य जीवस्यैव दुःखाद्यनर्थयोगात्तस्य च ब्रह्माभेदाभावात्, किं वा सत्यस्य विशेष्यस्यैवानर्थयोगात् ब्रह्मणस्तद्भेदाभावात्। यद्वा सत्यपि तात्विकाभेदे भेदाध्यासात् अथवा ब्रह्मणस्तत्त्वज्ञानित्वेन जीववदभिमानाभावात् आहोस्विद्दुःखादेः कल्पितत्वेन परमार्थतोऽनर्थाभावात्। नाद्यः। बंधमोक्षयोः सामानाधिकरण्यनियमेन मोक्षान्वयिनः सत्यस्य विशेष्यस्यैवानर्थयोगात्। न हि बंधाश्रयनाशो मोक्षः। किं तु सति तस्मिन्बंधमात्रस्य। अन्यथाऽऽत्मनाशो मोक्षः स्यात्। न चाविद्यासंबंधरूपो बंधश्चिन्मात्रस्य, दुःखाद्यनर्थस्तु प्रतिबिंबस्य जीवस्य। उपाधेः प्रतिबिंबपक्षपातित्वादिति युक्तम्। बहुजीववादे मुक्ता यद्भावमापन्नास्तस्य चिन्मात्रस्य बंधापातात्। एकजीववादेऽपि बंधतत्कार्यदुःखाद्यनर्थयोर्वैयधिकरण्यायोगात्। दुःखानुभवरूपानर्थस्य मुक्तिरूपपुमर्थसामानाधिकरण्यनियमाच्च। दुःखमेव च स्वतोऽनर्थः। अन्यत्तु तद्द्वारा। यथा च त्वत्पक्षे अनादिभावरूपं न निवर्तत इति सामान्यव्याप्तेरज्ञानं ज्ञाननिवर्त्यमिति विशेषव्याप्त्या बाधः तथोपाधिः प्रतिबिंबपक्षपातीति सामान्यव्याप्तेर्बंधोऽज्ञानं वा

स्वसमानाश्रयानर्थहेतुरिति विशेषव्याप्त्या बाधोस्तु । कथं चोपाधेः प्रतिबिंबपक्षपातित्वम् । औपाधिकस्य भेदस्योभयत्र सार्वज्ञादेर्बिंबे ब्रह्मण्येव लौहित्यस्य च स्फटिके दर्शनात् । मम तु प्रतिबिंबं छायादिवद्वस्त्वंतरम् । तत्रैव च मालिन्यादि । तव त्वनर्थस्सत्ये चिन्मात्र इति वैषम्यम् । न द्वितीयः । तत्पदलक्ष्यस्य विशेष्यस्य शुद्धस्य ब्रह्मणः त्वंपदलक्ष्येणानर्थाश्रयेण सदाप्यभिन्नत्वेन शुद्धेप्यनर्थापातात् । तत्पदवाच्यस्य विशिष्टस्य ब्रह्मणस्त्वनर्थाश्रयाद्विशेष्याद्भिन्नत्वेऽपि त्वंपदवाच्यो जीवोऽपि विशेष्याद्भिन्न इति जीवेप्यनर्थाभावापातात् । यथा च तत्पदवाच्यं विशिष्टमनर्थाश्रयाद्विशेष्याद्भिन्नमेवं त्वंपदवाच्यमपि । न तृतीयः । जीवस्य भ्रांतत्वेन स्वस्मिन् ब्रह्मतो भेदाध्यासेपि ब्रह्मणस्त्वन्मतेप्यभ्रांतत्वेन स्वस्मिन्संसाराश्रयाज्जीवाद्भेदाध्यासायोगात् । यदि च ब्रह्मणोऽपि भ्रांतिस्तर्हि भ्रांतत्वादेव हिताकरणादिसंभवात् तत्परिहारक्लेशोऽनर्थकः स्यात् । न हि स्वाप्नं स्वशिरश्छेदादिकं पर्यनुयोगार्हम् । किं च भेदारोपेऽपि तात्विकाभेदादनर्थः स्यात् । न हि वह्निर्गुंजापुंजत्वेनारोपितो न दहति । नापि संसारिण्यात्मन्यनात्मत्वारोपे संसारो नात्मगतः । अपि च बिंबस्थानीयस्येश्वरस्य भ्रांतत्वेऽपि यद्भावो मोक्षस्तस्य चिन्मात्रस्य भेदभ्रमाभावादनर्थो दुष्परिहरः । न चतुर्थः । तत्वज्ञानित्वेनानभिमानित्वेऽपि जीवन्मुक्तवद्दुःखित्वापरिहारात् । किञ्चाभिमानी त्वंपदवाच्यश्चेत्स एव संसरेत् । न च तद्युक्तमित्युक्तम् । त्वंपदलक्ष्यश्चेद्यद्भावो मुक्तिस्तस्य चिन्मात्रस्याप्यभिमानः स्यादित्युक्तम् । न पञ्चमः । मिथ्यात्वेऽपि जीवं प्रतीव ब्रह्म प्रत्यप्यनर्थत्वात् । अन्यथा तन्निवृत्त्यर्थं वेदांतश्रवणादिवैयर्थ्यम् । न हि जीवस्यापि तत्वतोऽनर्थोस्ति । तृतीयसूत्रे 'भोक्त्रापत्ते'रित्यनेन पौनरुक्त्यम् । त्वन्मते 'ब्रह्मविवर्तत्वेऽपि जीवजडयोर्वैजात्यं पृथिवीविकारत्वेऽपि वज्राश्मादीनामिवे'ति तृतीयसूत्रउक्तेः । 'भोक्त्रापत्ते'रित्यत्रापि फेनतरंगादिदृष्टांतेन तद्वैजात्यस्यैवोक्तेः । यदुक्तं परैः 'उपसंहारे'त्यादिसूत्रद्वयमेकमधिकरणम् । तत्राद्येनासहायस्योपादानत्वे क्षीरं दृष्टांत-

यित्वा द्वितीयेनासहायस्याप्यधिष्ठातृत्वे देवादयो दृष्टांतिताः 'देवादयो ह्यनपेक्ष्य बाह्यं साधनमिच्छामात्रेण प्रासादादीन्निर्मिमत इति वेदादिसिद्ध'मिति । तन्न । क्षीरादेरपि दधिभावे क्वाथातंचनादिसापेक्षत्वात् । 'पयोंबुव'दित्यत्र क्षीरेऽपीशः कर्तेति वक्ष्यमाणत्वेन तद्विरोधाच्च । क्षीरादिदृष्टांतस्य विवर्तानुगुणत्वाच्च । शुद्धविवर्तत्वेऽप्यज्ञानविशिष्टब्रह्मपरिणामो जगदिति चेत्तथापि देवादिदृष्टांतो न युक्तः । न ह्यज्ञातायाः शुक्ते रूप्यात्मना परिणामोऽधिष्ठातृसापेक्षः । इंद्रजालतौल्यविवक्षायां तु क्षीरदेवादिदृष्टांतौ न युक्तौ । यदि च प्रासादादिर्देवादिभिरिव जगदीश्वरेण कृतं तर्हि मिथ्या न स्यात् । एवं च क्षीरदृष्टांतो चेतनं प्रधानं स्वयमेव परिणमत इति वदतो निरीश्वरसांख्यस्यानुगुणः । देवादिदृष्टांतस्तु भिन्नेनोपादानेनेच्छामात्रेणेश्वरः सत्यजगत्स्रष्टेति वदतो ममानुगुणः । तव तु द्वयमपि प्रतिकूलम् । किंचाद्यसूत्र उपसंहारशब्दस्य मदुक्तं समाप्त्यर्थत्वं स्वरसम् । त्वदुक्तं सहकार्यंतरापेक्षार्थत्वं तु क्लिष्टम् । द्वितीयेऽपि मम लौकिकपिशाचादिदृष्टांतोक्तेर्लोकशब्दः स्वरसः । तव तु लोक्यतेऽनेनेति लोक इति भामत्युक्तरीत्या वेदपर इति न स्वरसः । [एतेन असहायस्य हेतुत्वे लौकिकक्षीरदृष्टांत उक्तः । द्वितीयेन तु वैदिकदेवादिदृष्टांत इति केषांचिन्मतमपास्तम् । सूत्रास्वारस्यस्य दृष्टांतप्रातिकूल्यस्य चोक्तत्वात् ।] किं च त्वत्पक्षे (पक्षद्वये)पि प्रकृतिकालकर्मादेः सहकारिणः सत्त्वात्तदनपेक्षत्वव्युत्पादनमनर्थकम् ।

यच्चोक्तं परैः कृत्स्नेत्यादिसूत्रचतुष्टयमेकमधिकरणम् । तत्र ब्रह्मणः कार्त्स्न्येन परिणामे मूलोच्छेदः स्यात् । एकदेशेन परिणामे निरवयवत्वशब्दव्याकोप इत्याद्येन पूर्वपक्षयित्वा शब्दमूलत्वेन ब्रह्मणो न तर्केणापह्नव इत्याद्यभिप्रायेण त्रिभिः सिद्धांतितम् । 'यद्यपि विवर्तस्यैव सिद्धांतितत्वात् कृत्स्नप्रसक्तिशंकानवकाशः तथापि पूर्वोक्तक्षीरादिदृष्टांतेन परिणामभ्रांत्याशंकिते आत्मनि चेतिसूत्रेणस्वप्नदृगात्मा हि मनसैव स्वरूपानुपमर्देन रथादीन् सृजतीति मायावादः स्पष्टीकृत'

इति । तन्न । विवर्तस्यादृश्यत्वाधिकरणप्रकृत्यधिकरणारंभणाधिकरणेषूक्तत्वेन परिणामभ्रांत्ययोगात् । योगे वाऽऽदावेव विवर्तप्रतिकूलं कुचोद्योत्पादकं क्षीरादिदृष्टांतमनुक्त्वा तदनुगुणस्वप्नदृष्टांत एव वाच्यः । सिद्धांते विवर्तविवक्षाप्ययुक्ता । तथात्वे हि द्वितीयसूत्रे शब्दगम्यत्वतर्कागम्यत्वे न वाच्ये । न हि ते भ्रांत्यधिष्ठानत्वोपयुक्ते । तृतीयेऽपि स्वप्नदृष्टांतः किं ब्रह्मणो जगद्विषयकभ्रांतिमत्त्वे जीवस्य स्वाप्नभ्रांतिमत्त्वं किं वा ब्रह्मणो जगद्भ्रमाधिष्ठानत्वे जीवस्य स्वाप्नभ्रमाधिष्ठानत्वं यद्वा ब्रह्मणो मायाविवद्भ्रामयितृत्वे जीवस्य भ्रामयितृत्वम् । नाद्यः । दार्ष्टांतिकानानुगुण्यात् । न हि ब्रह्म भ्रांतं । उक्तं हि भामत्यामपि 'भ्रांतस्य सर्वज्ञत्वानुपपत्ते'रिति । कल्पतरौ च 'अज्ञातं नटवद्ब्रह्म कारणं शंकरोऽब्रवी'दिति । न द्वितीयः । दृष्टांतानानुगुण्यात् । जीवस्य स्वाप्नभ्रमाधिष्ठानत्वे ह्यहं कर्तेतिवदहं गज इति धीः स्यात् । पक्षद्वयेऽपि सूत्रे विचित्रशक्त्युक्त्ययोगाच्च । न हि भ्रांतत्वं भ्रांत्यधिष्ठानत्वं वा विचित्रशक्तिसापेक्षम् । अत एव नांत्यः । न हि स्वप्नद्रष्टाऽन्यान् भ्रामयति । स्वाप्नसृष्टौ 'न तत्र रथा' इत्यादिश्रुत्युदाहरणमपि परकृतमयुक्तम् । श्रुत्युक्तः स्वाप्नस्रष्टा जीवश्चेत् 'स हि कर्ता तस्मिन्लोकाः श्रिता' इति वाक्यशेषविरोधात् । ईशश्चेद्गगनादिवत्स्वाप्नस्य व्यावहारिकत्वापातात् । तस्मादात्मनीति सूत्रं द्युभ्वाद्यधिकरणन्यायेनात्मशब्दमुख्यार्थस्य ब्रह्मणः प्रस्तुतजगत्कर्तृत्वोपयोगिविचित्रशक्त्युक्तिपरं । न तु स्वप्नदृष्टांतेन जगन्मिथ्यात्वोक्तिपरमिति । यच्चोक्तं परैः 'सर्वोपेतेत्यादिसूत्रद्वयमेकमधिकरणम् । तत्राद्येन 'आत्मनि चैवं विचित्राश्च ही'ति पूर्वसूत्रोक्तविचित्रशक्तित्वे 'यः सर्वज्ञः सर्ववित् सत्यकामः सत्यसंकल्प' इत्यादि श्रुतिरुक्ता । द्वितीयेन विचित्रशक्तियुक्ता अपि देवादय आध्यात्मिककरणसंपन्ना एव कार्यकराः । ब्रह्म तु 'अचक्षुष्कमश्रोत्र'मित्यादिश्रुत्या करणरहितमिति शंकिते 'अपाणिपाद' इत्यादिश्रुतेरकरणस्यापि ब्रह्मणो देवादिभ्योऽतिशयितशक्तियोगात्कर्तृत्वमिति सिद्धांतितमिति । तन्न । 'आत्मनी'ति सूत्रे त्वद्रीत्या भ्रांतत्वस्य वा भ्रमाधिष्ठानत्वस्य वा

मायावित्वस्य वोक्तत्वेनेह तद्विरुद्धे सर्वज्ञत्वसर्वशक्तित्वादौ श्रुत्युक्त्ययोगात्। न हि सर्वज्ञो भ्रांतः। न वा सर्वभ्रमाधिष्ठानम्। न वा मायावी मायिकद्रष्टा। न च तात्विकस्रष्टौ शक्तो मायिकं सृजति। किं च भ्रमाधिष्ठानत्वस्य विकरणत्वेनाक्षेपः शक्तिविशेषेण समाधानं चायुक्तम्। मायावित्वे च ब्रह्मणो मायिकप्रपंचद्रष्टृत्वं विरोधि। भ्रांतत्वं तु ब्रह्मणः परमतेऽपि नास्ति। प्रपंचं प्रति ब्रह्मणः कर्तृत्वे तु स सत्यः स्यादित्युक्तम्।

केचित्तु 'कृत्स्ने'त्यादिसूत्रषट्कमेकमधिकरणम्। निरवयवत्वाद्ब्रह्मानुपादानमिति प्राप्ते शब्दगम्यत्वात् सर्वशक्तित्वान्न तर्केणापह्नव इति सिद्धांत इत्याहुः। तन्न। त्वन्मते हि विशिष्टोपादानतायाः प्रकृत्यधिकरणादावुक्तत्वात् 'न तु दृष्टांतभावा'दित्यत्र बालयुवदृष्टांतेनोपपादितत्वाच्चैतत्पूर्वपक्षानुदयात्। सिद्धांतेऽपि सर्वशक्तित्वं न तावद्विशेष्यस्य। तस्यानुपादानत्वेन वैयधिकरण्यात्। नापि विशिष्टस्य। स्वस्य नानाविधहेयात्मना परिणामनिवारणाशक्तस्य तस्य सर्वशक्तित्वानुपपत्तेः। ॥ इति श्रुतेस्तुशब्दमूलत्वाधिकरणम् ॥ ८ ॥

---

अथ नप्रयोजनाधिकरणम्

## ॥ ॐ न प्रयोजनवत्त्वात् ॐ ॥

पूर्वत्र हेतुमुखयुक्तिविरोधोपास्तोऽत्र तु फलमुखदृष्टयुक्तिविरोधोपास्यत इति संगतिरधिकरणोपाधिरगतार्थता च। अत्र पूर्वोक्तं विष्णोः स्रष्टृत्वादिकं न युक्तमुत युक्तमिति चिन्ता। तदर्थं स्रष्टृत्वे सृष्ट्यादिसाध्यस्य फलस्य पूर्वमभावादपूर्णत्वमापतत्युत नेति। तदर्थं किं सृष्ट्यादिकं फलार्थमुत लीलारूपमिति। तदर्थं प्रेक्षावत्प्रवृत्तिः प्रयोजनोद्देशेनैवोत तदनुद्देशेनापीति। तदर्थमुद्रिक्तानंदस्य पुंसो हासगाननृत्तादौ प्रवृत्तिर्दयालोश्च परार्था प्रवृत्तिः किं स्वप्रयोजनोद्देशेनैवोत तदनुद्देशेनापि सुखोद्रेकादिसामग्रीत इति।

पूर्वपक्षमाह ॥ सयुक्तिकमित्यादिना ॥ अयं भावः । न तावदीश्वरस्य प्रयोजनमुद्दिश्य प्रवृत्तिः । अपूर्णत्वापातात् । न च प्रयोजनानुद्देशेऽप्यग्नेरूर्ध्वज्वलनादाविव स्वभावादेव प्रवृत्तिः । चेतनत्वात् । न च चेतनत्वेऽपि मत्तस्य नृत्तगानादाविव निष्फलैव प्रवृत्तिः । प्रेक्षावत्त्वात् । नापि प्रेक्षावत्त्वेऽपि दयया प्रवृत्तिः । दयासाध्यफलाभावात् । आप्तकामत्वात् । तदनुद्देशे च प्रेक्षावत्त्वं न स्यादित्युभयथापि न निर्दोषं ब्रह्मेति ।

सिद्धान्तमाह । सिद्धान्तयदिति । अयं भावः ।

अस्वभावप्रवृत्तौ हि प्राज्ञोप्याकांक्षते फलम् ।
स्वाभाविका निमेषाद्या न ह्युद्दिष्टप्रयोजनाः ॥
स्वभावभूता त्वीशस्य क्रमात्सृष्ट्यादिकर्तृता ।
चूतादीनां वसंतादौ पुष्पितत्वादिकं यथा ॥
देवस्यैष स्वभावोयमिति हि श्रुतिरब्रवीत् ।
गानव्याख्यानपूर्वेषु शिरोहस्तादिचेष्टितम् ।
प्रयोजनमनुद्दिश्य प्रेक्षावंतोऽपि कुर्वते ॥

अपि च—

दुःखोद्रेकात्सुखोद्रेकाद्रोदने हसितादिके ।
प्रयोजनमनुद्दिश्य प्रवर्तंतेऽपि पंडिताः ॥

अत एव रोदने हसितादौ कारणमेव पृच्छंति न तु प्रयोजनम् । ईश्वरस्य सुखोद्रेकात् प्रवृत्तिरित्युक्तमानंदमयाधिकरणे । किञ्च—

दयाया यद्यपि फलं दयालुस्तूद्दिशेन्न तत् ।
वास्रादिरिव वत्सादौ दययैव प्रवर्तते ॥

तथा चेश्वरस्य स्वप्रयोजनाभावेऽपि दयया परप्रयोजनाय प्रवृत्तिर्युक्ता ।

किञ्च— अतिप्रयत्नसाध्येषु फलमाकांक्षते जनः ।
न त्वनायाससंसाध्ये स्वांगुल्यग्रादिचालने ॥

अत एवांगुल्यग्रादिचालने प्रयोजनाप्रश्नः । प्रश्नेऽपि तूष्णीमेवेति प्रतिवचनम् । अन्यथा 'वृथा चेष्टां न कुर्वीत'ति निषेधो निर्विषयः स्यात् ।

भावेऽपि तस्यापीशाधीनत्वेनेश्वरस्य दोषौ । नाद्यः । कर्मादेरपेक्षणात् । द्वितीयेऽपि किं जीवानामिव प्रत्यवायहेतुतया दोषौ यद्वा 'समोहं सर्वभूतेष्वि'त्यादिशास्त्राप्रामाण्यापादकतया अथवा समत्वरूपसद्गुणविरोधित्वेन नीचत्वापादकतया । नाद्यः । ईश्वरस्य विधिनिषेधातीतत्वात् । अनादिसिद्धयोग्यताद्यनुसारित्वस्यैव तत्र समशब्दार्थत्वात् । उक्तं हि—

'सेवायोग्यातिरेकेण स्वानामपि न दास्यति ।
अपराधातिरेकेण नान्यस्यातस्समो हरिः ॥' इति ।
'यत्र यस्य यथावृत्तिर्विहिता वर्तनं तथा ।
ज्ञानं वापि समत्वं तद्विषमत्वं ततोऽन्यथा ॥' इति च

अत एव यमस्य समवर्तित्वप्रसिद्धिः ।

नहि मातृकलत्रादौ गुरुशिष्यादिकेऽपि च ।
वसिष्ठपुल्कसादौ च समधीस्सम उच्यते ॥

न वा दुष्टान्निगृह्णन् शिष्टांश्चानुगृह्णन् राजा विषमः । 'शुनि चैव श्वपाके चे'त्यादि त्वधिष्ठानवैषम्येऽपि तदधिष्ठितस्य भगवतस्तदभावपरम् । तृतीयेऽपि किं विविधतत्तत्स्वभावकरणाद्वैषम्यादिकं किं वाऽनादिनित्यतत्तत्स्वभावोल्लंघनात् यद्वाऽनादिसिद्धविविधतत्तत्स्वभावस्यान्यथाकरणे शक्तत्वेऽपि तदकरणात् अथवाऽनादितत्तत्स्वभावनियमनात् । नाद्यः । चेतनस्वभावस्यानादित्वात् । न द्वितीयः । ईश्वरस्य तत्तत्स्वभावानुसारेणैव फलप्रदत्वात् । न तृतीयः । तस्य वैषम्याद्यनापादकत्वात् ।

स्वभावमन्यथाकर्तुं यश्शक्तोऽप्यनुवर्तते ।
नासौ लोकेऽपि विषमो न वा निर्घृण उच्यते ॥
समर्थोऽपि हि हंसादीन्काकीकर्तुं हि यो मुनिः ।
न काकीकुरुतेऽयं किं लोके विषम उच्यते ॥
समर्थोऽपि च काकादीन् हंसीकर्तुं हि यो मुनिः ।
न हंसीकुरुतेऽयं किं लोके निर्घृण उच्यते ॥

न चतुर्थः । स्वभावनियामकत्वस्य निरतिशयस्वातन्त्र्यरूपमहागुणानुगुणत्वेन नीचत्वानापादकत्वात् । स्वभावाननुसारिदयायाश्चेश्वरे गुणत्वा-

भावेनानपेक्षितत्वात् । अन्यथेश्वरो दयालुत्वाद्दुःखमपि सुखमधर्ममपि धर्मं कुर्यात् । खिद्येत च लौकिकदयालुवत्प्राणिनां दुःखदर्शनेन । उक्तं हि

'विषमत्वं तु दोषाय शुभाशुभविपर्यये ।
शुभाशुभनियंतृत्वं न दोषो गुण एव स ॥' इति ।
'न विष्णोर्विषमत्वं तु योग्यतापेक्षया क्वचित् ।
योग्यतायास्तन्नियत्या विषमत्वं क्वचिद्भवेत् ॥' इति च ।

[जीवानामिव प्रत्यवायहेतुतया दोषौ यद्वा 'समोहं सर्वभूते'ष्वित्यादि-शास्त्राप्रामाण्यापादकतया अथवा सर्वसमत्वरूपसद्गुणविरोधित्वेन नीचत्वापादनतया । नाद्यः । प्रवाहतोऽनादिकर्मापेक्षाभावात् । परंतु तत्कर्मशाधीनम् । न द्वितीयः । ईश्वरस्य विधिनिषेधातीतत्वात् । न तृतीयः । अनादिसिद्धयोग्यताद्यनुसारित्वस्यैव तत्र समशब्दार्थत्वात् । उक्तं हि—

'सेवायोग्यातिरेकेण स्वानामपि न दास्यति ।
अपराधातिरेकेण नान्यस्यातः समो हरि'रिति ॥
'यस्य यत्र यथावृत्तिर्विहिता वर्तनं तथा ।
ज्ञानं चापि समत्वं तद्विषमत्वमतोन्यथे'ति च ॥

अत एव यमस्य समवर्तित्वप्रसिद्धिः ।

न हि मातृकलत्रादौ गुरुशिष्यादिकेऽपि वा ।
वसिष्ठपुल्कसादौ च समधीः सम उच्यते ॥

न हि दुष्टान्निगृह्णन् राजा विषमः । 'शुनि चैव श्वपाके चे'त्यादि त्वधिष्ठानवैषम्येऽपि तदधिष्ठितस्य भगवतस्तदभावपरम् । चतुर्थेऽपि किं अनादिनित्यतत्तत्स्वभावोल्लंघनात् वैषम्यादिकं यद्वा अनादिसिद्धविविधस्वभावस्यान्यथाकरणे शक्तत्वेऽपि तदकरणात् अथवाऽनादितत्तत्स्वभावनियमनात् किं वा विविधतत्तत्स्वभावकरणात् । नाद्यः । ईश्वरस्य तत्तत्स्वभावानुसारेणैव फलप्रदत्वात् । न द्वितीयः । तस्य वैषम्याद्यनापादकत्वात् ।

'स्वभावमन्यथाकर्तुं यः शक्तोऽप्यनुवर्तते ।
नासौ लोकेऽपि विषमो न वा निर्घृण उच्यते ॥

समर्थोऽपि च हंसादीन् काकीकर्तुं हि यो मुनिः ।
न काकीकुरुतेऽयं किं लोके विषम उच्यते ॥
समर्थोऽपि च काकादीन् हंसीकर्तुं हि यो मुनिः ।
न हंसीकुरुतेऽयं किं लोके निर्घृण उच्यते ॥

न तृतीयः । स्वभावनियामकत्वस्य निरतिशयस्वातन्त्र्यरूपमहागुणानुगुणत्वेन नीचत्वानापादकत्वात् । स्वभावाननुसारिदयायाश्चेश्वरे गुणत्वाभावेनानपेक्षितत्वात् । अन्यथेश्वरो दयालुत्वाज्जडमपि चेतनं सुरापानादि च धर्मसाधनं कुर्यात् । खिद्येत च लौकिकदयालुवत्प्राणिनां दुःखदर्शनेन । उक्तं हि—

'विषमत्वं तु दोषाय शुभाशुभविपर्यये ।
शुभाशुभनियंतृत्वं न दोषो गुण एव स' इति ॥
'न विष्णोर्विषमत्वं तु योग्यतापेक्षया क्वचित् ।
योग्यतायास्तन्नियत्या विषमत्वं क्वचिद्भवे'दिति च ॥

न चतुर्थः । चेतनस्वभावस्यानादित्वेनेशाकृतत्वात् ] तदेतदभिप्रेत्योक्तमनुव्याख्याने—

'वैषम्यं निर्घृणत्वं च वेदाप्रामाण्यकारणम् ।
नांगीकार्यमतोन्यत्तु न वैषम्यादिनामक'मिति ॥

सूत्रेऽप्यनुव्याख्यानोक्तमाद्यपक्षमाद्येन निरस्य द्वितीयसूत्रे तर्हि स्वातन्त्र्यं नोपपद्येतेति शंकां 'उपपद्यत' इत्यनेन निरस्य 'उपलभ्यत' इत्यनेनानुव्याख्यानोक्तो द्वितीयः पक्षः स्वीकृत इति द्रष्टव्यम् ।

यदुक्तमुभाभ्यां—ईश्वरः सस्ये पर्जन्य इव साधारणकारणम् । कर्माणि तु बीजानीवासाधारणकारणानि । बीजशक्तिवैचित्र्याद्धि व्रीहियवादिसस्यवैचित्र्यम् । तस्मान्नेश्वरस्य वैषम्यादीत्याद्यसूत्रार्थ इति । तन्न । असाधारणकारणस्यापि कर्मणः 'एष ह्येव साधुकर्म कारयती'त्यादिश्रुत्या 'पुण्यपापादिकं विष्णुः कारये'दित्यादिस्मृत्या चेश्वरकारितत्वेन वैषम्याद्यनिस्तारात् । न चाबाध उपचरितार्थत्वं बहुश्रुत्यादेर्युक्तम् । उक्तं हि 'परात्तु तच्छ्रुते'रित्यत्र भामत्यामपि 'एष ह्येव साधुकर्म कारयतीत्येव-

मादयस्तावच्छ्रुतयः सर्वव्यापारेषु जंतूनामीश्वरपरतन्त्रतामाहुः । तदसति बाधके न प्रशंसामात्रपरतया व्याख्यातुमुचित'मिति ॥

एतेन यत्कैश्चिदुक्तम् 'जीव ईश्वरदत्तया साधारण्या स्वातन्त्र्यशक्त्या स्वयमेव शुभाशुभयोः प्रवर्तते । ईशस्त्वशुभ उपेक्षते । शुभे त्वनुमन्यत इति न वैषम्यादि । तदुक्तं 'आदावीश्वरदत्तयैव पुरुषः स्वातन्त्र्यशक्त्या स्वयं तत्तज्ज्ञानचिकीर्षणप्रयतनान्युत्पादयन्वर्तते । तत्रोपेक्ष्य ततोऽनुमन्य विदधत्तन्निग्रहानुग्रहौ तत्तत्कर्मफलं प्रयच्छति ततः सर्वस्य पुंसो हरि'रितीति । तन्न । शुभाशुभप्रवृत्तिहेतुस्वातन्त्र्यदानप्रयुक्तवैषम्याद्यनिस्तारात् । 'य आत्मानमंतरो यमयति एष ह्येव साधुकर्म कारयति न ऋते त्वत्क्रियते किञ्चनारे' इत्यादिश्रुत्या 'यथा दारुमयीं योषां नरः स्थिरसमाहितः । भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायये'त्यादिस्मृत्या च विरोधाच्च । ईशप्रेरणं विना प्रवृत्तौ च कथं जीवस्येश्वरशरीरत्वम् । कथं च जीवस्य स्वाहिते स्वयमेव प्रवृत्तिः । हितभ्रांत्या चेद्भ्रांतेरपीश्वरकर्तृकत्वेन वैषम्यादि दुर्वारम् । किंचेश्वरस्य शक्तस्याप्युपेक्षायां निर्घृणत्वादि दुर्वारम् । अशक्तत्वे तु 'आत्मनि चैवं विचित्राश्च हि सर्वोपेता च तद्दर्शना'दित्यादि —सूत्रैः 'परास्य शक्ति'रित्यादिश्रुतिभिश्च विरोधः । एतेनैवेश्वरेच्छा अस्त्वित्येवं सामान्याकारा । न तु विशेषाकारा ततो न वैषम्यादि इति तार्किकल्पनाप्यपास्ता । यस्य कस्यापि यत्किंचिदस्त्वित्येवमाकारत्वे हि कदाचिदीश्वरस्य दुःखं सुकृतादिमतो नरकादिकं च स्यात् । नापि मदिष्टमस्त्वित्येवमाकारा । तदिच्छास्वरूपस्याद्याप्यनिरूपणात् । तस्य तस्य तत्तत्कर्मानुसारेण सुखाद्यस्त्वित्येवमाकारत्वे च कर्मण ईशानधीनत्वे श्रुत्यादिविरोधः । अधीनत्वे च वैषम्यादि दुर्वारम् । तस्मादनादियोग्यतानंगीकारे वैषम्यादि दुर्वारम् ।

यच्चोक्तमुभाभ्यां आदिसृष्टौ कर्मैव नेति न शंक्यम् । अनादित्वात् संसारस्येति द्वितीयार्थ इति । तन्न । मम रीत्या सुप्रसिद्धां संसारानादितामुपेत्यापेक्षितं कर्मापीशाकारितमित्यवश्यपरिहर्तव्यप्रबलशंकापरिहारपरत्वस्य 'अनादित्वात्कर्मणश्चे'ति भाष्योदाहृतस्मृत्यनुसारिणः संभवेऽन्य-

परत्वायोगात् । तृतीयस्यापि मम रीत्या न च कर्मसापेक्षत्वे स्वातन्त्र्यानुपपत्तिः । कर्मणामीशाधीनत्वेन तदुपपत्तेः । न चैवं पुनर्वैषम्याद्यापत्तिः । स्वाधीनकर्मापेक्ष्य विचित्रफलप्रदत्वस्य श्रुत्यादिषूपलभ्यमानत्वेनेष्टापत्तेरित्यवश्यपरिहार्यशंकाद्वयनिरासकत्वसंभवे परोक्तसंसारानादित्वोपपत्त्यादिपरत्वमयुक्तम् । न हि संसारानादित्वेऽनुपपत्तिशंकास्ति । यद्यप्याद्यसूत्रे वैषम्यनैर्घृण्ये द्विवचननिर्दिष्टे । तथापि 'स कारयेत्पुण्यमथापि पाप'मिति विषयवाक्यउभयकारयितृत्वस्यैकवचनेन निर्देशात्तदनुसारेणेह सूत्र 'उपलभ्यतेचे'त्येकवचनं यथा 'आत्मनी'ति पूर्वसूत्रे पुल्लिंगेनात्मशब्देन निर्देशेपि 'सर्वोपेते'ति सूत्रे विषयवाक्यस्थदेवताशब्दानुसारेण स्त्रीलिंगं तद्वत् । परेषां त्विदमधिकरणमत्यंतासंगतम् । भ्रांतत्वेन वा भ्रमाधिष्ठानत्वेन वा वैषम्यादिशंकानुदयात् । न हि स्वप्नेऽयं सुख्ययं दुःखीति भ्रांतिमतस्तद्विषयस्य वैषम्याद्यस्ति । मायावित्वे चेश्वरस्य स्वमायाकल्पितकर्मादिज्ञानायोगेन तत्सापेक्षत्वोक्त्ययोगात् । अत एव भामत्यां 'अभ्युपेत्य च सृष्टेस्तात्विकत्वमिदमुक्तम् । अनिर्वाच्या तु सृष्टि'रित्यस्याधिकरणस्य स्वमतप्रतिकूलतोक्ता ।

॥ इति वैषम्यनैर्घृण्याधिकरणम् ॥ १० ॥

---

अथ सर्वधर्मोपपत्त्यधिकरणम्

## ॥ ॐ सर्वधर्मोपपत्तेश्च ॐ ॥

पूर्वाधिकरणेष्वेकैकगुण एकैकदोषाभावे च युक्त्यविरोध उक्तः । अत्र तु उपसंहारसूत्रे सर्वत्रेति संगत्यादिकम् । अत्र विष्णोरुक्तं निर्दोषगुणपूर्णत्वं न युक्तमुत युक्तमिति चिंता । तदर्थं किं गुणित्वे कदाचिद्दोषित्वं प्रयोजकं अत एव दोषाभावे गुणाभाव उत दोषित्वे दोषपरिहाराशक्तिर्गुणाभावे च गुणसंपादनाशक्तिः प्रयोजिकेति ।

पूर्वपक्षस्तु । गुणिनः कदाचिद्दोषित्वनियमादीश्वरस्य गुणित्व-

वद्दोषित्वं वा दोषाभाववद्गुणाभावो वा । न तु चेतनांतरेष्वदृष्टा सर्व-गुणपूर्तिर्दोषमात्रराहित्यं चेति ।

सिद्धांतस्तु । नित्यनिर्मुक्तदोषं च सदा संप्राप्तसद्गुणम् ।
परंब्रह्म भवेत्तत्र प्रेप्साशक्तियुतत्वतः ॥

ब्रह्म सदाप्राप्तसर्वसद्गुणम् । तत्प्रेप्सुत्वे सति तत्र शक्तत्वात्संमतवत् । तथा सदात्यक्तसर्वदोषम् । तज्जिहासुत्वे सति तत्र शक्तत्वात् । संमतवत् । प्रेप्सादिकं च प्रेक्षावत्त्वेनेत्युपपत्त्यनुगृहीतया सौत्रच-शब्दोपात्तया 'गुणाः श्रुता' इत्यादिभाष्योदाहृतया श्रुत्या गुणदोषा-भावरूपसर्वधर्मसिद्धिरिति । इदं सूत्रं सर्वधर्मविनिर्मुक्तब्रह्मवादिनां प्रतिकूलमिति स्फुटमेव । अस्मिन्पाद आद्येऽधिकरणत्रिके वेदस्या-प्रमाणत्वादीश्वरस्यैवाभावात् जन्मादिसूत्रोक्तं लक्षणमसंभवीत्याक्षिप्य तन्निरास इत्याद्यत्रिकमेका पेटिका । तत्राप्याद्येऽधिकरणे स्मृतिविरोधेन साक्षात्सर्ववेदप्रामाण्याक्षेपः । द्वितीये कारीर्यादिविधिवाक्याप्रामाण्य-साधकयुक्तिविरोधमुखेन सर्ववेदप्रामाण्याक्षेपः । तृतीये 'मृदब्रवी'-दित्यादिसिद्धार्थवाक्याप्रामाण्यसाधकदृष्टयुक्तिविरोधमुखेन सर्ववेद-प्रामाण्याक्षेपः । चतुर्थमारभ्याधिकरणचतुष्टये वेदप्रामाण्यमीश्वर-स्वरूपं च स्वीकृत्योक्तलक्षणाक्षेप इत्यधिकरणचतुष्टयमेका पेटिका । तत्राद्ये श्रुत्युपसर्जनकयुक्तिविरोधेन लक्षणमसंभवीत्याक्षेपः । द्वितीये बहुश्रुतिसिद्धयुक्तिविरोधेन लक्षणमसंभव्यतिव्याप्तं चेत्यापेक्षः । तृतीये विष्णोः कर्तृत्वेऽपि बहुयुक्तिविरोधाज्जन्मादिसूत्राभिप्रेतं स्वतंत्रकर्तृत्वम-संभवीत्याक्षेपः । चतुर्थे तु विष्णोः महदादौ स्वतंत्रकर्तृत्वेऽपि श्रुतिप्रत्यक्ष-संवादियुक्तिविरोधान्न घटादिकर्तृत्वमित्याक्षेपः । अष्टमे सप्तमोक्तो जीवस्य स्वतंत्रकर्तृत्वे यस्तर्कविरोधः सर्व ईश्वरेऽपि सम इति व्याघात-पर्यवसायितर्कविरोधे शंकिते शुष्कतर्कागोचरत्वादिना तदुद्धारः । एवं हेतुमुखयुक्तिविरोधेषु निरस्तेषु नवमदशमाभ्यां फलमुखैरीश्वरस्य दोषित्वपर्यवसायिभिर्लिंगश्रुत्यनुगृहीतैर्दृढतर्कैर्विरोधे शंकिते तन्निरास इति द्विकमेका पेटिका । एकादशे तु जिज्ञासासूत्रे ब्रह्मशब्देन

सूचितस्य जन्मादिसूत्रे संभावितस्य पूर्णगुणत्वस्याक्षेपे तदुद्धार इति द्रष्टव्यम् । अत्रानुव्याख्याने

‘ स्मृतियुक्तिश्रुतिगुणयुक्तयो बहुयुक्तयः ।
एवं चतुर्विधा नैव विरुध्यंतेऽन्वयं प्रति ॥ ’

इत्येतत्पादीयाधिकरणानामुपाधय उक्ताः । तत्राद्येऽधिकरणे स्मृत्या द्वितीये युक्त्या तृतीये दृढयुक्त्या चतुर्थे श्रुतिसंवादियुक्त्या विरोधनिरास इति स्पष्टम् । स्मृतियुक्तीत्यत्र युक्तिशब्दस्य दृढादृढयुक्तिपरत्वात् । पंचमे बहुश्रुतिसिद्धयुक्तया षष्ठे बहुयुक्तिभिः सप्तमे बहुप्रमाणसंवादियुक्तया अष्टमे व्याघातपर्यवसायितया बहुमतयुक्तया नवमे प्रयोजनोद्देशेऽनुद्देशे च दोष इति बहुसुदृढयुक्तया दशमे कर्मादिसापेक्षत्वेऽनपेक्षत्वे च दोष इति बहुमुखदृढयुक्तया एकादशे निर्दोषत्वेति पूर्णगुणत्वमहाप्रमेयविरोधित्वेन बहुमतयुक्त्या विरोधनिरास इति पंचममारभ्य सप्ताप्युपाधयो बहुयुक्तिशब्देन विवक्षिता इति द्रष्टव्यम् ।

॥ इति सर्वधर्मोपपत्त्यधिकरणम् ॥ ११ ॥

इति श्रीमद्ब्रह्मण्यतीर्थपूज्यपादानां शिष्येण व्यासयतिना
विरचितायां श्रीमद्भाष्यटीकाविवृतौ
तात्पर्यचंद्रिकायां द्वितीयाध्यायस्य प्रथमः पादः ॥ २ ॥ १ ॥

॥ श्रीकृष्णार्पणमस्तु ॥



॥ श्रीः ॥

श्रीमद्ब्रह्मण्यतीर्थपूज्यपादशिष्यश्रीमद्व्यासमुनिविरचिता

# तात्पर्यचन्द्रिका

## द्वितीयाध्यायस्य द्वितीयः पादः

॥ श्री गुरुभ्यो नमः हरिः ॐ ॥

श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥

युक्त्यविरोध उक्तः । समयाविरोध उच्यते । यद्यपि वेदानां 'नविलक्षणत्वा'दित्यत्रापौरुषेयत्वेन निर्दोषत्वमाद्याध्याये ब्रह्मणि समन्वयश्चोक्तः । वेदविरोधिनां सांख्यादिसमयानां तु 'इतरेषां चानुपलब्धे'रित्यत्रानातिमूलत्वयुक्तीनां च गतपाद एवाभासत्वमुक्तम् । तथापि— अनादिकालतो वृत्ताः समया हि प्रवाहतः ।

न चोच्छेदोऽस्ति कस्यापि समयस्येत्यतो विभुः ॥

इत्यनुव्याख्यानोक्तरीत्या समयानां वेदवदनादितोनुवृत्तत्वादभियोगतो बहुजनपरिगृहीतत्वाद्बहुयुक्त्युपबृंहितत्वात् प्राज्ञैः कपिलादिभिः प्रवर्तितत्वाच्च वेदवदेव प्रामाण्यमिति मंदस्य शंकायां

"दौर्लभ्याच्छुद्धबुद्धीनां बाहुल्यादल्पवेदिनाम् ।
तामसत्वाच्च लोकस्य मिथ्याज्ञानप्रसक्तितः ।
विद्वेषात् परमे तत्वे तत्ववेदिषु चानिशम् ।
अनादिवासनायोगादसुराणां बहुत्वतः ।
दुराग्रहगृहीतत्वाद्वर्तंते समयाः सदा । '

इत्यनुव्याख्यानोक्तरीत्या प्रवाहानाद्यनुवृत्तिबहुजनपरिग्रहयोरन्यथाप्युपपत्तेर्वेदवच्च स्वरूपानादित्वस्याभावाद्युक्तीनां च वक्ष्यमाणदृढयुक्त्यागमबाधितत्वेनाभासत्वादत एव च प्रवर्तकानामप्यप्राज्ञत्वादित्येवं 'इतरेषां चानुपलब्धे'रित्यनेनोक्तानाप्तत्वस्य तत्तत्प्रमेयेषु दृढयुक्ति-

विरोधस्य विशिष्योक्त्या प्रपंचनार्थोऽयं पादः । प्रपंचनं च न समयानामुच्छेदनार्थं । तेषां प्रवाहतोऽनंतत्वात् । किं त्वीशानुग्रहयोगिनां सतां पुंसां तन्निमित्तसंशयादिनिरासार्थम् । विहितं चासन्मतनिराकरणं मुमुक्षोः 'विद्यां चाविद्यां चे'त्यादिश्रुतिष्विति सार्थकोयं पादः । तत्र समया द्विविधाः । हैतुका पाषंडाश्चेति । उक्तं हि

'योगसांख्यकणादाक्षपादा वै हेतुवादिनः ।
पश्वीशशाक्तबुद्धाध्याः पाषंडा इति कीर्तिता ॥' इति ।

यद्यपि 'वेदेन सहवादो यो वेदवाद इतीरितः ।
तर्केण वेदस्यान्यार्थकल्पनं तद्विदो विदुः'

इत्युक्तलक्षणा वेदवादिनोऽपि

'वेदवादरतो न स्यान्न पाषंडी न हैतुकी ।
वेदवादरताः पार्थ नान्यदस्तीति वादिनः ॥' इत्यादौ

पाषंड्यादिवदेव निषिद्धाः । तथापि त आद्यपाद एव निरस्ता इति नेह निरस्याः । तदाह 'वेदवादिनां प्रथमपादे निराकृतत्वा'दिति । तत्र हैतुका हेतुभिः प्रबला इत्यादौ निराकार्याः । हैतुकेष्वपि सेश्वरेभ्यो वैशेषिकादिभ्यः प्रायेण निरीश्वराः सांख्यादयो वैदिकस्येश्वरवादस्यातिविरोधिनः । यद्यपि चार्वाकोऽत्यंतविरोधी । तथापि तन्मतस्यातितुच्छत्वेन 'इतरेषां चानुपलब्धे'रिति न्यायसंचाराविषयत्वेन च प्रथमं निरासानर्हत्वादादौ सांख्या निराकार्याः । सांख्यमतमपि केवलाचेतनकर्तृत्वचेतनसहिताचेतनकर्तृत्वाभ्यां द्वेधा । इह च कर्तृत्वं नाम स्वत एव प्रवृत्तिमत्त्वम् । तत्राद्यं वैदिकस्य स्वतंत्रचेतनकर्तृत्वस्य चेतनरूपविशेष्यस्यैवालंगीकारेणात्यंतविरोधीत्याद्याधिकरणे तन्निरासः । द्वितीयमपि सांख्यमतं गुणभूतेश्वरानुगृहीतप्रधानकर्तृत्वेन जीवसहितप्रधानकर्तृत्वेन चेति द्विधा । तत्र यद्यपि निरीश्वरं द्वितीयं सेश्वरादाद्यादतिविरोधि । तथाप्याद्यस्य सेश्वरस्य 'न ऋत' इत्यादिश्रुतेर्गुणभूतेश्वरविषयत्वसंभवात् 'व्यतिरेकानवस्थिते'रिति प्रथमाधिकरणोक्तदोषो नेत्याक्षेपेण प्रवृत्तेर्द्वितीयाधिकरणे निरासः । इदं च मतं सेश्वरमपि

सांख्यमतत्वादीश्वरस्य स्वातंत्र्यास्वीकारेण फलतो निरीश्वरवादांतर्भावाच्च न सेश्वरवैशेषिकादिपरीक्षायां निरस्तम् ।

किंत्विहैव सांख्यपरीक्षायां । तृतीये मा भूत्केवलमीश्वरगुणकं वा जडं कर्तृ । तथापीश्वरो न कर्ता । सदेहस्यैव चेतनस्य कर्तृत्वात् । ईश्वरस्य चादेहत्वात् । श्रुत्यनुमानाभ्यां केवलस्येश्वरगुणस्य वा जडस्य कर्तृत्वनिरासोप्ययुक्तः । तयोरप्रमाणत्वादिति द्वितीयाक्षेपेण मध्य उत्थितस्य तथा वस्तुतो चेतनस्य देहस्यैव कर्तृत्वांगीकारेण सांख्यमतसन्निकृष्टस्य तथा उत्तरसूत्रवक्ष्यमाणपुरुषाश्मदृष्टांतनिर्वाहकनिरासविषयस्य च चार्वाकस्य निरासः । अनंतरं चार्वाकं प्रत्युक्तो विषयाद्यभावदोषो नास्माकमिति तृतीयाक्षेपेणोत्थितस्य जीवसहिताचेतनकर्तृत्वस्य निरासः । जीवसहितस्य प्रधानस्य कर्तृत्वमपि जीवस्योपसर्जनत्वप्राधान्याभ्यां द्वेधा । तत्र चेतनस्याचेतनं प्रत्युपसर्जनत्वरूपस्याद्यस्यातिविरुद्धत्वाच्चतुर्थे तन्निरासः । पंचमे तु चतुर्थोक्तांगित्वानुपपत्त्युद्धारेणोत्थितस्य द्वितीयस्य निरासः । एवं निरीश्वरे चतुर्विधे सांख्ये सचार्वाकेऽधिकरणपंचकेन निरस्ते षष्ठे निरीश्वरपक्षोक्तो दोषो नास्माकमीश्वरवादिनाम् । किं त्वीश्वरोष्टगुणक एव । नत्वानंदादिगुणक इति पंचमाक्षेपेण समुत्थितसेश्वराक्षपादकणादादि निरासः । योगस्तु 'एतेन योगः प्रत्युक्त' इत्यतीतपाद एव विशिष्य निरस्तः ।

एवं हैतुकेषु निरस्तेषु पाषंडनिरासावसरः । पाषंडोऽपि वेदप्रामाण्यानंगीकारांगीकाराभ्यां द्वेधा । तत्राद्योऽतिविरोधित्वादादौ निराकार्यः । स च बौद्धजैनभेदेन द्वेधा । तत्र बौद्धशास्त्रस्य प्रथमनिर्मितत्वात् प्रबलत्वाच्चादौ बौद्धा निराकार्याः । तेऽपि वैभाषिकाः सौत्रांतिकाः माध्यमिकाः योगाचाराश्चेति चतुर्धा । तत्र यद्यपि परमाणुपुंजरूपः क्षणिको बाह्यार्थो घटादिः सन्प्रत्यक्षश्चेति वदतः सौत्रांतिकात्सोऽनुमेय इति वदन्वैभाषिकोत्यंतं विरोधी । ततोऽपि ज्ञानातिरेकेण बाह्यार्थ एव नास्तीति वदन्योगाचारोऽतितरां विरोधी । ततोऽपि सर्वशून्यवादी माध्यमिकोऽतितमां विरोधीति माध्यमिकयोगाचारवैभाषिक-

सौत्रांतिकाः क्रमेण निराकार्याः । तथापि परमाण्वारंभवादनिरासेन तत्पुंजवादोपस्थितेः पुंजरूपबाह्यार्थसत्त्ववादित्वेनैकीकृत्य अवांतरभेदमविवक्षित्वा तार्किकं प्रत्युक्तमीश्वरस्य वैदिकत्वमयुक्तम् वेदस्यैवाप्रमाणत्वादिति षष्ठाक्षेपेण प्रवृत्तयोर्वैभाषिकसौत्रांतिकयोस्सप्तमे निरासः । अथ परमाणुपुंजवादिनं प्रत्युक्तो दोषो नास्माकमिति सप्तमाक्षेपेणोत्थितस्य शून्यवादस्य विज्ञानवादादप्यतिविरुद्धत्वादष्टमे तन्निरासः । परिशेषान्नवमे शून्यवादिनं प्रति 'नासतो दृष्टत्वा'दित्युक्तो दोषो नास्माकमित्यष्टमाक्षेपेण समुत्थितस्य विज्ञानवादस्य निरासः । दशमे शून्यवाद्युक्तमसत्त्वं विज्ञानवाद्युक्तं सत्त्वं च स्यादितिवदतां स्याद्वादिनामस्माकं नैकैकपक्षोक्तदोष इति नवमाक्षेपेण प्रवृत्तस्य क्षपणकस्य निरासः ।

एवमवैदिके पाषंडे निरस्ते वैदिकपाषंडनिरासावसरः । स च शैवस्कांदसौरगाणपत(त्य)शाक्तादिभेदेनानेकधा । तत्र सर्वेभ्योऽपि शैवसमयः प्रबल इति तस्य शैवपाशुपतकालामुखमहाव्रतभेदेन चतुर्विधस्य क्षपणकं प्रति 'नैकस्मिन्नसंभवा'दित्युक्तो दोषो नास्माकमिति दशमाक्षेपेण प्रवृत्तस्यैकादशे निरासः । यद्यपि स्कांदसौरगाणपतादिवन्महावाममध्यमवामाणुवामभेदेन त्रिविधं शाक्तमतमपि शैवमतनिरासकन्यायेनैव निरस्तम् । तथापि स्त्रीमात्रादुत्पत्त्यसंभव इति विशेषदोषविवक्षया द्वादशे निरस्तमित्यधिकरणानामवांतरसंगतिः । अत्र तत्तत्समयोक्तानां पूर्वपक्षन्यायानां तद्विरोधिनां सिद्धांतन्यायानां च प्रसिद्धत्वादत्रभाष्यटीकयोः स्पष्टत्वादनुव्याख्यानसुधयोः प्रपंचितत्वाच्च नास्माभिः पृथगुच्यंते । उक्तं च न्यायविवरणे 'उक्तविरोधिनस्तत्तत्समयसिद्धाः पूर्वपक्षन्यायास्तद्विरोधिनोन्य इति प्रसिद्धमेवे'ति ॥

## ॥ ॐ रचनानुपपत्तेश्च नानुमानम् ॐ ॥

अत्र श्रुतिसमन्वयेनोक्तं ब्रह्मणः स्रष्टृत्वादिकं न घटत उत घटत इति चिंता । तदर्थं सांख्यसमयविरोधात्किं श्रुतिरप्रमाणमुत नेति । तदर्थं युक्तिमूलत्वेनाभिप्रेतसांख्यसमयोक्तं प्रधानस्य जगद्रचयितृत्वा-

दिकं किं युक्तमुत नेति । एवमन्यत्राप्येतत्पादीयाधिकरणेषु चिंता-परंपरोह्या । अस्मिन्नधिकरणे टीका स्पष्टार्था । सूत्राक्षरयोजना तु अनुमानं सांख्योक्तानुमानकल्पितं प्रधानं न स्वतंत्रकारणम् । जडस्य रचयितृत्वानुपपत्तेः । चशब्दोक्तान्मानाभावाच्च । न चानुमानं मानम् । महदादिकं सकारणकं सजातीयकारणजन्यं वा सजातीयोपादानकं वा स्वतंत्रकारणजन्यं वा कार्यत्वादित्याद्यनुमानरचनायाः सिद्धसाधनेन स्वतंत्रजडजन्यमिति रचनायाश्च दृष्टांताभावेनानुपपत्तेरिति द्रष्टव्या । द्वितीयाधिकरणे 'यच्च किंचि'दित्यादिभाष्योदाहृतश्रुतौ सर्वगतत्वोक्तेः प्रकृतोपयोगं दर्शयितुं टीकायां 'सत्तादिप्रदानाये'त्युक्तम् । 'स एवे'त्यादि भाष्यं सौत्रचशब्दव्याख्यानमित्याह ॥ न केवलमित्यादिना ॥ नानुग्राहकत्वमात्रमिति समस्तं पदम् । तथा च न केवलमन्यत्राभावादित्यनेनोक्तं कार्यस्येश्वराधीनत्वमेव सेश्वरसांख्योक्तस्यानुग्राहकत्वमात्रस्य विरोधि । किं तु स एवेत्यादिभाष्योक्तप्रमाणासिद्धसौत्रचशब्दसूचितं सर्वहेतुभूतप्रकृतिसत्तादेरीश्वराधीनत्वमपि विरोधीत्यर्थः ॥ सूचितमिति शेष इति ॥ सत्तादिप्रदत्वं च प्रामाणिकैरंगीकृतमिति सौत्रचशब्देन सूचितमित्यर्थः । 'अभ्युपगमेप्यर्थाभावा'दिति तृतीयाधिकरणसूत्रेऽर्थशब्देन न केवलं प्रयोजनमभिप्रेतम् । किं तु विषयोऽपि । भाष्येऽपि प्रयोजनशब्देन न केवलं फलम् । किंतु प्रयुज्यतेऽनेनेति विषयोपीत्यभिप्रेत्याह ॥ नापि विषय इति ॥ अपरामर्शेऽदर्शनादित्यादि ॥ धर्मादिकं नास्ति । प्रत्यक्षेणानुपलंभादित्यादिपरामर्शाभावे धर्माद्यभावस्याप्रतीतेः । परामर्शेन धर्माद्यभावदर्शनं तु नानुमानाद्भिद्यते । परामर्शेत्यनेनानुमितिकरणस्य दर्शनशब्देनानुमितेश्च त्वयैवोक्तत्वादित्यर्थः । स्वव्याहतिमुपपादयति ॥ न ह्यभ्युपगमो प्रयोजनश्चेति युक्तमिति ॥ 'मत्सिद्धांत'-इत्यनेन सप्रयोजनत्वाद्यविनाभूतसिद्धांतत्वमभ्युपगम्य 'मास्तु प्रयोजन-मित्यनेनाप्रयोजनत्वोक्तिर्व्याहतेत्यर्थः । अत्र भाष्ये 'उपेक्ष्य'इत्यनेन टीकायां 'न युक्त'मित्यनेन च पूर्वसूत्रान्नञोनुवृत्तिर्दर्शिता । अनेन च त्वदीयशास्त्रस्य सिद्धांतत्वानभ्युपगमे सिद्धमस्मदिष्टम् । अभ्युपगमेपि

तद्व्यापकयोर्विषयप्रयोजनयोरभावाभ्युपगमाद्व्याघात इति सूत्राक्षरयोजना सूचिता। चतुर्थपंचमाधिकरणयोर्ष्टीका स्पष्टार्था।

स्पष्टत्वात्पूर्वपक्षादिन्यायानां भाष्यटीकयोः।
अपव्याख्यैव सूत्राणामस्माभिर्दूष्यतेऽञ्जसा॥
भाष्यकारेण सन्मार्गे गच्छतान्ये कुमार्गगाः।
निरस्ता इति भावेन कंठतो न निराकृताः॥

अत्र यदुक्तमुभाभ्यां 'रचनानुपपत्ते'रित्यादि 'विप्रतिषेधा'दित्यंतं सूत्रदशकमेकमधिकरणं चेतनानधिष्ठितस्य प्रधानस्य जगद्रचयितृत्वनिरासकमिति। तन्न। मम रीत्या निरीश्वरसांख्यविंध्यादिमते केवलाचेतनकर्तृत्वमतस्य सेश्वरसांख्यपातंजलादिमतस्य पुनरपि निरीश्वरसांख्ये पुरुषोपसर्जनप्रकृतिकर्तृत्वमतस्य प्रकृत्युपसर्जनपुरुषकर्तृत्वमतस्य च पूर्वपूर्वदोषोद्धारेणोत्थितस्यावश्यनिरसनीयस्य च क्रमेण निरासायाधिकरणपंचकसंभवे तदनिरासेनैकीकरणायोगात्। किं च तृतीयाध्यायस्य तृतीयपादे 'एक आत्मनः शरीरेभावा'दित्यधिकरणं त्वया चार्वाकमतनिरासकत्वेन व्याख्यातम्। ततो वरमत्रैव मतांतरनिरासावसरे तन्निरासः। किं च चिन्मात्रस्यापि कर्तृत्वभ्रांतत्वभ्रामयितृत्वानि न युक्तानीत्युक्तम्। भ्रमाधिष्ठानत्वं त्वचेतनस्यापि युक्तम्। विकारस्त्वचेतनस्यैव युक्तः। कर्तृत्वेतरपक्षेषु सौत्ररचनाशब्दास्वारस्यं च। यदि च चिन्मात्र आरोपितं वाऽविद्यांतःकरणादिविशिष्टे तात्विकं वा कर्तृत्वं तर्हि प्रधानेऽपि पुरुषभेदाग्रहादारोपितं वा पुरुषविशिष्टे तात्विकं वा चेतनत्वकर्तृत्वादिकमस्तु। यत्तु परैरुक्तमचेतनस्य प्रवृत्तेरप्यनुपपत्तेरिति द्वितीयार्थ इति तन्न। उदासीनस्वभावस्य चेतनस्यापि न प्रवृत्तिरित्यवश्यपरिहार्यसांख्यशंकाया अहं करोमीत्याद्यनुभवबलेन निरासार्थं 'पयोंबुवच्चे'दित्युत्तरसूत्रेऽनुषंगार्थं 'रचनानुपपत्ते'रित्यनेनापौनरुक्त्यार्थं च द्वितीयस्थस्य प्रवृत्तिपदस्य चेतनप्रवृत्तिपरताया एव न्याय्यत्वात्। तव पूर्वसूत्रे निर्दिष्टस्यानुपपत्तेरित्यस्येहानुषंगः। मम तु नानुमानम्। किंतु चेतन एवेति पूर्वसूत्र एव प्रकृतस्य चेतनस्य।

सांख्यशंकाया अवश्यपरिहार्यत्वादेव हि त्वयापि 'ननु चेतनस्यापि न प्रवृत्ति'रिति चोद्यपूर्वकं 'सत्यमेवं तथापी'त्यादिना सा सूत्राद्बहिरेव परिहृता ।

ननु कार्यरूपेण स्वतः परिणामो रचना । तदर्था सत्वरजस्तमसां साम्यावस्थातः स्वतः प्रच्युतिः प्रवृत्तिरित्यपौनरुक्त्यमिति चेन्न । तथापि 'अंगित्वानुपपत्ते'रित्यनेन पुनरुक्तेः । तस्यापि त्वया 'साम्यावस्थात्यागेनांगांगिभवानुपपत्तेरिति व्याख्यातत्वात् । यच्च यथा वत्सविवृध्द्यर्थमचेतनं पयः स्वत एव प्रवर्तते लोकोपकारार्थं चांबु स्यंदते । तथा प्रधानमपीति तृतीये शंकांशार्थ इति तन्न । मम रीत्या 'एतेन ह वाव पयो मंडं भवती'ति श्रुत्यनुसारिसौत्रपरिहारानुसारेण पयः परमप्रकृते चेतननिरपेक्षाचेतनस्य परिणामे दृष्टांतः । अंबु तु तादर्थ्येन प्रकृते प्रवृत्तिमात्रे दृष्टांत इति दृष्टांतद्वयसाफल्यसंभवे तत्त्यागायोगात् । पयसो धेन्विच्छादिनैव प्रवृत्त्या स्वतः प्रवृत्तौ दृष्टांतत्वायोगाच्च । यच्चोक्तं कार्योत्पादने प्रधानव्यतिरेकेणापेक्षणीयस्यानवस्थितेः प्रधानं न सहकार्यंतरापेक्षम् । ततश्च सदा कार्यं स्यादिति चतुर्थार्थ इति तन्न । मम रीत्या तृतीयसूत्रप्रकृतेश्वरस्य व्यतिरेकप्रतियोगित्वेन द्वितीयसूत्रप्रकृतचेतनप्रवृत्तेश्चानवस्थितेरित्यनेनान्वयं स्वीकृत्य 'चेतनस्यापीशव्यतिरेकेण यदा न प्रवृत्तिस्तदा जडस्य नेति किमु वाच्य'मिति सुधोक्तमार्गेण कैमुत्यन्यायपरत्वसंभवे बह्वध्याहारायोगात् । सांख्यमतेपि कर्मादेरपेक्षणीयस्य सत्त्वाच्च ।

यच्चोक्तं तृणादेः स्वत एव क्षीरभाववत्प्रधानास्यापीति न युक्तम् । धेनुशरीरादन्यत्र तृणादेस्तदाभावादिति पंचमार्थ इति तन्न । मम रीत्याऽवश्यनिरसनीयसेश्वरसांख्यमतनिरासकत्वसंभवे 'पयोंबुव' दिति न्यायनिरस्ततृणादिदृष्टांतांतरनिरासकत्वायोगात् । यद्यपीह टीकायां 'व्यतिरेके'ति तुरीयसूत्रमयस्कांतादिदृष्टांतरनिरासार्थं प्रतिभाति । तथाप्यस्मिन्पक्षेऽपरितोषादेव सुधायां 'यदे'त्यादिना कैमुत्यन्यायार्थत्वमिति पक्षांतरमुक्तम् । किं च परमते पूर्वपादोक्तेन

'क्षीरवद्धी'त्यनेन विरोधः । तत्र लोकदृष्ट्या क्षीरं नैरपेक्ष्ये दृष्टांतितम् । अत्र तु शास्त्रदृष्ट्या सापेक्षत्वोक्तिरिति चेन्न । अत्रोक्तशास्त्रदृष्ट्या तत्र दृष्टांतस्य तत्वतः साध्यवैकल्यापातात् । यच्चोक्तं प्रधानस्योक्तरीत्या प्रवृत्तिरेव न युक्ता । तदभ्युपगमेपि स्वाभाविकत्वात्प्रवृत्तेः सहकार्यपेक्षाभाववत्प्रयोजनापेक्षाभावप्रसंगादिति षष्ठार्थ इति तन्न । अर्थाभावादित्यनेनार्थापेक्षाभावप्रसंगस्य लक्षणीयत्वात् । प्रवृत्तिमभ्युपगम्य प्रयोजनाभावेन पुनः प्रवृत्तिनिरासे च विरोधात् । अप्रेक्षावत्त्वापादने च प्रधान इष्टापत्तेः । अस्मन् मते तु चार्वाकं प्रत्यर्थाभावो नोपपाद्यः । तदभ्युपगमेप्यर्थयोर्विषयप्रयोजनयोरभावादिति सूत्रार्थः ।

यच्चोक्तं स्वतोसमर्थस्याप्यन्यसन्निधानेन प्रवृत्तौ अंधपंगुपुरुषदृष्टांतमयस्कांताश्मसूचीदृष्टांतं चाशंक्य निरसितुं सप्तममिति तन्न । मम रीत्या 'अंगित्वानुपपत्ते'रित्युत्तरसूत्रानुगुणावश्यनिरसनीयपुरुषोपसर्जनप्रकृतिकर्तृत्वपक्षनिरासकत्वसंभवे' 'पयोंबुव'दित्यादिन्यायनिरस्तायस्कांतदिदृष्टांतनिरासकत्वायोगात् । अष्टमे पौनरुक्त्यम् । यच्चोक्तमुक्तदोषपरिहारेणान्यथानुमितावपि प्रधानस्य ज्ञानशक्तिवियोगान्न रचयितृत्वमिति नवमार्थ इति तन्न । मम रीत्या 'अन्यथे'त्यनेन 'अंगित्वानुपपत्ते'रित्यव्यवहितप्रकृतादचेतनप्राधान्यादन्यथात्वं विवक्षित्वाऽवश्यनिरसनीयप्रकृत्युपसर्जनपुरुषकर्तृत्वनिरासे संभवति व्यवहितप्रकृतादन्यथात्वं विवक्षित्वा बहुसूत्रोक्तदृढदोषाणामनुचितं परिहारं चांगीकृत्य ज्ञशब्दस्य क्लेशेन ज्ञानार्थत्वं चोपेत्य 'रचनानुपपत्ते'रित्यनेनोक्तस्याचेतनत्वादरचयितृत्वस्य पुनरिहोक्त्ययोगात् । यच्चोक्तं क्वचित् सप्तेंद्रियाणि क्वचिदेकादशेति संख्यैरुक्तत्वाद्विप्रतिषिद्धं सांख्यमतमिति दशमार्थ इति तन्न । इंद्रियसंख्याविरोधस्य 'सप्तगतेर्विशेषितत्वा'दिति वक्ष्यमाणन्यायेन 'सप्त प्राणाः प्रभवंति । तस्मात् दशेमे पुरुषे प्राणा आत्मैकादश' इत्यादिवेदांतेष्विव परिहारसंभवात् । किंच सूत्रदशकस्यैकाधिकरणत्वे 'पुरुषाश्मव'दिति सूत्रस्य 'अभ्युपगमेपी'तिसूत्रानंतर्यमयुक्तम् । न ह्यभ्युपगमेपीत्यनेनार्थाभाव उक्ते 'पुरुषाश्मव'

दित्यनेनांधपंग्वादिदृष्टांतशंका संगतेति ॥

॥ रचनानुपपत्त्यधिकरणमारभ्य अन्यथानुमित्यधिकरण-
पर्यंतमधिकरणपंचकम् ॥ १-५ ॥

---

## अथ वैशेषिकाधिकरणम्

## ॥ ॐ महद्दीर्घवद्वा ह्रस्वपरिमंडलाभ्यां ॐ ॥

कारणैकार्थप्रत्यासत्त्यादिनेति ॥ कार्यगतरूपादिगुणानां कारणगतरूपादयो गुणाः कारणैकार्थप्रत्यासत्त्याऽसमवायिकारणानि । कर्मत्वादिपदोपात्तया कार्यैकार्थप्रत्यासत्त्येति द्रष्टव्यम् । शिष्टषड्गुणायोग्य इति ॥ कर्तृत्वार्थं ज्ञानेच्छाप्रयत्नानामावश्यकत्वे तदितरगुणेषु संख्यादिपंचकातिरिक्तषड्गुणायोग्य इत्यर्थः । संकेतमात्रमिति ॥ परमाणुद्व्यणुकगतपरिमाणमेवाणु । त्र्यणुकादि परिमाणं तु महदिति संकेतोऽप्रामाणिकः । द्व्यणुकवत्त्र्यणुकेप्यापेक्षिकाणुत्वस्य त्र्यणुकवद्द्व्यणुके चापेक्षिकमहत्त्वस्य संभवादिति भावः । संख्यादेर्महत्वारंभकत्वप्रसंगादिति ॥ द्व्यणुकपरिमाणे परमाण्वादिसंख्यायाः कारणत्वे चतुरणुकारंभकानेकत्र्यणुकगतबहुत्वसंख्याप्रचययोः चतुरणुकगतमहत्त्वारंभकत्वप्रसंगादित्यर्थः । 'तदभाव' इति सूत्रस्थतच्छब्दस्याप्रकृतपरत्वाशंकां निरस्यति ॥ परिमाणाभिधानसन्निधापितमिति ॥ तदिति भाष्यप्रतीकोपादानम् । तस्य व्याख्या तत्रेति । स्वपदस्य व्याख्या समवायेति ॥ तस्येति ॥ रूपिरूपादिनिष्ठविशेषणविशेष्यभावस्येर्थः ॥ विशेषणेऽतिप्रसंग इति ॥ घटाभावभूतलयोर्विशेषणविशेष्यभावे व्यभिचारनिरासाय भावमात्रनिष्ठत्वेन विशेषणे रूपादावपि विशेषणविशेष्यभावस्याभाववदेव संबंधं विनाप्युपपत्त्याऽप्रयोजकत्वादप्रयोजकेन च साधनेऽतिप्रसंग इत्यर्थः । यद्वा संयुक्तानिष्ठत्वविशेषितेन विशेषणविशेष्यभावत्वेनाभावनिष्ठतद्दृष्टांतेन संबंधाभावसाधनसंभवादतिप्रसंग इत्यर्थः । सृगालवाक्यमिति ॥ सृगालरूपेणेंद्रेण तर्कविद्यानुरागस्य सृगालजन्महेतुतोक्तेत्यर्थः । अत्र यदुक्तं

परैः। महद्दित्येकं सूत्रमेकमधिकरणम्। उभयथेत्याद्यपरिग्रहादित्यन्तं सूत्रषट्कमधिकारणांतरमिति तन्न। उभयोरपि तार्किकप्रक्रियानिरासकत्वात्। विज्ञानशून्यवादयोरिव चेहावांतरप्रमेयभेदस्यादूषणात्। सांख्याधिकरणानामिवैकाधिकरणत्वस्यैव न्याय्यत्वात्। यच्चोक्तं महद्दीर्घं च त्र्यणुकादिकं विजातीयात् ह्रस्वादिरूपाद्द्व्यणुकादित इव चेतनाद्ब्रह्मणोऽचेतनं जगज्जायत इति स्वपक्षदोषोद्धारार्थमाद्याधिकरणमिति तन्न। पादासंगतेः। पुनरुक्तेश्च। आद्ये पादे स्वपक्षदोषोद्धारः। द्वितीये तु परपक्षदूषणमिति हि ते मतम्। उक्तं च 'न विलक्षणत्वा'दित्यत्र विजातीयादपि जन्म। न हि तत्र साक्षात् चेतनाचेतनयोरुपादानोपादेयभावे वृश्चिकगोमयादिदृष्टांतेषु सर्वलौकिकपरीक्षकसंमतेषूक्तेष्वपि विजातीयमात्रयोस्तद्भावे परमात्रसिद्धं दृष्टांतांतरमात्रं वक्तुमधिकरणांतरं युक्तम्। किञ्च महतो दीर्घस्य च त्र्यणुकादिकस्य विजातीयाद्ह्रस्वाद्द्व्यणुकादुत्पत्तावपि परिमंडलात्परमाणुतोनुत्पत्तेः सूत्रे परिमंडलशब्दो व्यर्थः स्यात्। ननु सौत्रो वाशब्दश्चार्थस्सन् न परिमंडलभूतद्व्यणुकसमुच्चयार्थः। तथा च परिमंडलादपरिमंडलवदिति दृष्टांतांतरार्थस्स इति चेत् तर्हि कार्यकारणयोर्वैजात्यस्फोरणाय ह्रस्वप्रतियोगित्वेन महद्दीर्घपदमिव परिमंडलप्रतियोगित्वेनापरिमंडलपदं प्रयुज्य महद्दीर्घापरिमंडलवद्ह्रस्वपरिमंडलाभ्यामिति सूत्रणीयम्। यथान्यासपक्षे हि समासैकदेशस्य ह्रस्वस्य महद्दीर्घान्वयः। परिमंडलस्य तु वा शब्दसमुच्चितापरिमंडलान्वय इति क्लिष्टम्। किं च पररीत्या विजातीयं तंतुपटादि परित्यज्याविजातीयस्य विलक्षणमात्रस्य परमाणुद्व्यणुकादेः दृष्टांतीकरणमयुक्तम्। न हि परमाणुत्वादिकं जातिः पृथिवीत्वादिना संकरात्। यद्यपि परमाणुद्व्यणुकादिपरिमाणानि तार्किकमते विजातीयानि। तथापि न तेषामुपादानोपादेयत्वम्। किञ्चायं दृष्टांतो विवर्तप्रतिकूलः। अपि च तव चेतनाद्ब्रह्मणोऽचेतनं जगदिति दार्ष्टांतिकोऽध्याहार्यः। मम तु न।

केचित्तु परिमंडलात्परमाणुतो ह्रस्वस्य द्व्यणुकस्य तस्माच्च महद्दीर्घस्य त्र्यणुकादेर्जन्म तावदयुक्तम्। अणोरण्वंतरसंयोगस्य व्याप्यवृत्तित्वे तत्कार्यपरिमाणाधिक्यायोगात्। एकदेशवृत्तित्वे चाणोर्निरंशत्वहानेः। सूत्रे

वाशब्दस्तु चार्थः । तथा च परमाणुभ्यो द्व्यणुकादिक्रमेण जगदुत्पत्तिवद्वैशेषिकाभ्युपगतं गगननित्यत्वादिकमन्यदप्यसमंजसमिति सूत्रार्थ इत्याहुः॥ तन्न । पंचमीनिर्दिष्टे ह्रस्वशब्दे षष्ठ्यंततताया आवृत्तेश्च कल्प्यत्वात् । किञ्च व्याप्यवृत्तित्वाव्याप्यवृत्तित्वविकल्पः किं द्व्यणुकसंयोगविषयः परमाणुसंयोगमात्रविषयो वा । नाद्यः । द्व्यणुकस्य सांशत्वेन तत्संयोगस्यैकदेशवृत्तित्वसंभवात् । द्वितीये परिमंडलाद्ह्रस्ववद्वेत्येव सूत्रणीयम् । अन्यत्तु निरर्थकम् । किञ्च गगननित्यत्वाभावस्येवाणुभ्यो जगज्जन्माभावस्यापि परं प्रति साध्यत्वाद्दृष्टांतो न युक्तः । अपि च मदीया ह्रस्वपरिमंडलपरिमाणयोः कार्यपरिमाणोत्पादकत्वे महद्दीर्घपरिमाणप्रतिबन्दीरूपा युक्तिः सूत्रारूढा । संयोगस्य व्याप्यवृत्तित्वमित्यादिका त्वदीया तु न । मम पक्षे सूत्रे त्वप्रत्ययायोगस्तु 'प्रचयविशेषाच्च मह'दितिकणादसूत्रानुसारेण । यच्चोक्तं परैः अणुष्वाद्यकर्मणो हेत्वभ्युपगमेऽनभ्युपगमे च न कर्मेति वा कर्महेतोरदृष्टस्याणुगतत्व आत्मगतत्वे च न कर्मेति वा सृष्टिकाले संयोगोत्पत्त्यर्थं संहारकाले विभागोत्पत्त्यर्थं च न कर्मेति वा द्वितीयेऽधिकरण आद्यसूत्रस्य त्रेधार्थ इति तन्न । आद्येऽनभ्युपगमपक्षस्य द्वितीये परमाणुगतत्वपक्षस्य चात्यंतासंभवित्वात् । द्वितीयेऽदृष्टस्याचेतनस्य चेतनानधिष्ठितस्याप्रवृत्तेरिति त्वदुक्तस्य हेतोरसिद्धेः । अदृष्टमीश्वराधिष्ठितमिति हि तन्मतम् । तृतीये उभयार्थकर्माभाव इति सूत्रणीयम् । मम मत इव सूत्रे हेत्वसूचनान्न्यूनता च । तस्मान्मम रीत्या समवाय्यसमवायिकारणनिरासकसूत्रयोर्मध्यस्थमिदं सूत्रमवश्यनिरसनीयस्य सर्वव्यवस्थापकत्वेन पराभिप्रेतस्येश्वरेच्छानिमित्तत्वस्य निरासकम् । द्वितीयचतुर्थषष्ठानां परकीया व्याख्या न विरुद्धा । यत्तु अणवः प्रवृत्तिस्वभावा वा निवृत्तिस्वभावा वोभयस्वभावा वाऽनुभयस्वभावा वा । नाद्यद्वितीयौ । नित्यं प्रवृत्तेर्निवृत्तेर्वा भावप्रसंगात् । तृतीये विरोधः । चतुर्थे निमित्तवशात्प्रवृत्तिनिवृत्ती वाच्ये । निमित्तं चादृष्टं नित्यं संनिहितमिति नित्यं प्रवृत्त्यादेर्भावप्रसंगादिति तृतीयार्थ इति तन्न । सूत्रे उभयथा चेत्यादाविव विकल्पसूचकाभावात् । अस्य विकल्पस्य स्वांगीकृतब्रह्माविद्यादिकारणेष्वपि

साम्याच्च । आद्यसूत्रे मया तार्किकं प्रत्युक्तदोषस्य मम मतेऽप्राप्तिस्तु 'स्वत एव काले विशेषांगीकृतेश्चे'ति भाष्य एव दर्शिता । किञ्च मम रीत्या भाष्योक्तमार्गेण सत्तासमवायो जनिरिति तार्किकैः स्वीकृतत्वात् समवायस्य च नित्यमेव भावात् सर्वं नित्यजातं स्यात् । तथा च सृष्टि-प्रलयानुपपत्तिरिति पूर्वसूत्रप्रकृतसमवायस्येहान्वयसंभवे प्रवृत्तेः निवृत्ते-र्वेत्यध्याहारो भावादित्यस्य प्रसंगहेतुता च न युक्ता । यच्चोक्तं वायवीयादि-परमाणवो रूपादिहीनास्तैजसादयस्तु तद्युक्ता इति परमाणुषु गुणोपचया-पचयौ स्तो न वा । आद्ये तेषु परिमाणोपचयापचयावपि स्याताम् । तयोस्ताभ्यां व्याप्तेः । द्वितीये तैजसाद्यणुकार्येषु रूपादि न दृश्येतेति पंचमार्थ इति तन्न । तन्मत ईश्वरादपि जीवे त्वन्मते चात्मनोप्यंतःकरणे आकाशादपि पृथिव्यादौ च गुणाधिक्येपि परिमाणाधिक्यादृष्टेः ।

केचित्तु अणूनां रूपादिमत्त्वे पूर्वसूत्रेणानित्यत्वदोषः उक्तः । अत्र तु रूपादिराहित्ये तत्तत्कार्ये रूपादिर्न स्यादिति दोष उच्यत इत्याहुः । तन्न अन्यथा च दोषादिति सूत्रणीयम् ।

॥ इति वैशेषिकाधिकरणम् ॥ ६ ॥

---

## अथ समुदायाधिकरणम्

## ॥ ॐ समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॐ ॥

रूपविज्ञानवेदनासंज्ञासंस्काररूपेणेति ॥ विषयेंद्रियाद्यात्मना स्थिता रूपरसगंधस्पर्शशब्दात्मकाः परमाणवो रूपस्कंधः । निर्विकल्पकं ज्ञानं विज्ञानस्कंधः । दुखं वेदनास्कंधः । सुखं तु दुःखाभाव एव । सुख-मपि वेदनास्कंध इति केचित् । कुंडली गौर्गच्छतीत्यादि सविकल्पकज्ञानं संज्ञास्कंधः । तेषां वासना संस्कारस्कंध इति द्रष्टव्यम् ॥ अतिपीडाया-मनवस्थेति ॥ अन्योन्याश्रयपरिहाराय मेलनस्य मेलनांतरेण वा सामी-प्येन वा विशिष्टानेकहेतुकत्वेऽनवस्थेत्यर्थः । तदंगीक्रियत एवेति ॥

अनेकत्वसंख्यारूपस्य समुदायस्य विरलेष्वपि परमाणुषु सत्त्वेन तस्य सदातनत्वादिति भावः । व्यवहारादेरिदं चेदं चेतीति । अनेकत्वसंख्याया अपेक्षाबुद्धिव्यंग्यत्वेन तत्प्रतीतिव्यवहारयोरिदं चेदं चेत्यपेक्षाबुद्ध्यधीनत्वादित्यर्थः॥ सामीप्यापेक्षेति ।। विप्रकृष्ट इदं चेदं चेत्यपेक्षाबुद्धेरदर्शनादिति भावः । पुरुषस्यापि तथात्वमिति ।। विषयवदात्मनोपि क्षणिकत्वेन परमाणुदर्शनमपेक्षाबुद्धिः समुदायव्यवहार इत्येतेषामेकविषयकत्वमिवैकाधिकरणत्वमपि न युक्तमित्यर्थः॥ विशेषकार्योत्पत्तिमपि निराकुर्वत्सूत्रमिति ।।

यद्यपि— 'इति चेत्कार्यसंभूतिमात्रव्यापृतिकारणम् ।
न तु कार्यविशेषेषु व्यापृतं कारणं भवेत्'

इत्यनुव्याख्याने, 'कारणानि खलु स्वसदृशकार्यजननव्यापाराणि न तु विसदृशकार्यजनने व्यापृतानी'ति सुधायां च विसदृशकार्यरूपविशेषकार्योत्पत्तिरपि द्वितीय सूत्र एव निरस्ता, सूत्रे मात्रशब्देनापेक्षाबुद्ध्यादेरिव वैसादृश्यस्यापि व्यावर्तितत्वादित्युक्त्वा ।

'उत्तरोत्पत्तिमात्रेण विनाशात्पूर्ववस्तुनः ।
न संस्कारार्पकत्वं च युज्यते कस्यचित्क्वचित्॥'

इत्यनुव्याख्याने, 'अथ मतम् कारणक्षणाः कार्येषु संस्कारानर्पयंति । अतः पूर्वपूर्वात्मसंस्कारयोगिनामुत्तरोत्तरेषामात्मनामनुमानादिव्यवहार इत्येतन्निराकरणाय सूत्रमुत्तरोत्पादे चे'त्यादि सुधायां च तृतीयसूत्रं बौद्धमते संस्कारनिरासार्थमित्युक्तम् । तथापीह 'एकं कार्यमुत्पाद्य तस्य नष्टत्वात्परस्परप्रत्ययस्तदपेक्षया व्यवहार इति न युज्यत' इति द्वितीयसूत्रभाष्ये तट्टीकायां च विरलपरमाणुकार्याणां मिलितपरमाणूनां क्षणिकत्वेनापेक्षाबुद्ध्यादिविषयत्वादिकमेव द्वितीयसूत्रे निरस्तम्, सूत्रे मात्रशब्देनापेक्षाबुद्धिरेव व्यावर्तितेत्युक्त्वा । [त्वं न युक्तमिति द्वितीय सूत्रार्थः । तत्र मात्रशब्दश्चापेक्षाबुद्ध्यादेरेव व्यावर्तक इति विवक्षितम् ।] 'न विशेषकार्योत्पत्ति'रित्यादि तृतीयसूत्रभाष्ये तट्टीकायां च विसदृश-

कार्यरूपविशेषकार्योत्पत्तिरेव तृतीयसूत्रे निरस्तेति सूत्रद्वयं प्रकारांतरेण व्याख्यातमिति द्रष्टव्यम् ॥ अन्यथा क्षणिकत्वविरोध इति ॥ यदि तु स्वतस्सदृशकार्यजनका अप्यणवोऽदृष्टसहकृता आदावेव विसदृशानुत्पादयेयुः तर्हि स्वतः सदृशजनकोऽपि घटोऽदृष्टसहकृतः कदाचित् पटमुत्पादयेदिति भावः । पूर्वमविच्छेदेनोत्पत्तिर्यौगपद्यमित्यभिप्रेत्योक्तम् । इदानीं सहावस्थानं यौगपद्यमित्यभिप्रेत्याह । तथा यस्मिन् क्षण इति ॥ यः प्रतिक्षणं विनाश इत्यादि ॥ यद्यपि बुद्धिपूर्वकाबुद्धिपूर्वकविनाशौ प्रतिसंख्याप्रतिसंख्यानिरोधाविति बौद्धानां परिभाषा ।

उक्तं हि—'बुद्धिपूर्वविनाशो हि प्रतिसंख्यानिरोधधीः ।
अबुद्धिपूर्वकस्तेषां निरोधोऽप्रतिसंख्यये'ति ।

तथापि प्रतिक्षणविनाशस्याबुद्धिपूर्वकत्वात्संतानेन सह विनाशस्य तु प्रायेण बुद्धिपूर्वकत्वात् प्रतिक्षणविनाशसंतानविनाशावप्रतिसंख्याप्रतिसंख्यानिरोधशब्दार्थत्वेनोक्तावित्यविरोधः ॥ स्वकार्यवियोगकाल इति ॥ कार्योत्पत्तिक्षणे कारणं तावत्सदेव । क्षणिकस्य चोत्पत्तिकाल एव वियोगकाल इति वियोगकालेऽपि कारणं सदेवेति भावः ॥ त्वदनुमानेऽसिद्धिरित्यादि ॥ अर्थक्रियाकारित्वं कदाचित् कार्यकरत्वं चेद्गगनेऽपि तस्य सत्त्वात्तत्र तन्नेति वदता त्वया प्रतिक्षणं कार्यकरत्वमिति वक्तव्यम् । तच्च पक्षे प्रपंचे दृष्टांते दीपे च नेत्यसिद्ध्यादीत्यर्थः ॥ साऽऽकाशे न नास्तीति ॥ किं त्वस्त्येव । ततश्च मदीयहेतौ त्वदुक्तं साधनवैकल्यं नेति शेषः ॥ कालादिभेदेनोपपत्तेरित्यादि ॥ चूतफलादौ श्यामत्वाश्यामत्वादिः कालादिभेदेनोपपन्नः । यद्यपि तार्किकाणां तत्रापि भेदः । तथापि तदेवेदमिति प्रत्यभिज्ञानान्नभेदोसत्संमत इत्यर्थः ॥ अन्यथैकक्षणेपीति ॥ अभेदे प्रमितेऽपि भेदश्चेदेकक्षणवर्तिनोर्घटपटयोर्भेददर्शनात्तदृष्टांतेनैकक्षणवर्तिनोऽपि घटस्य स्वस्माद्भेदः स्यादित्यर्थः । यद्वा एकक्षणवर्तिनोऽपि घटस्य पुरुषभेदेन ज्ञातत्वाज्ञातत्वयोर्दृष्टेर्भेदः स्यादित्यर्थः ॥ एतेन प्रदीपोऽपि व्याख्यात इति ॥ बाल्युवशरीरवद्दीपेप्यत्यंतभेदाभावेऽपि कालभेदेन परिमाणभेद इति भावः ॥

दृष्टांताभावादिति ॥ मुसलाहतैकक्षणवर्तिपरमाण्वात्मकघटरूपदृष्टांत-स्वरूपे तत्र साध्यसाधनयोश्च मम विप्रतिपत्तेरित्यर्थः ॥

॥ इति समुदायाधिकरणम् ॥ ७ ॥

---

## अथ असदधिकरणम्

## ॥ ॐ नासतोऽदृष्टत्वात् ॐ ॥

सौत्रस्य 'अदृष्टात्वा'दित्यस्य शून्यकारणत्वस्याप्रत्यक्षत्वादिति असति कारणत्वस्य काप्यननुभावादिति असत्कारणत्व आगमस्यादृष्टत्वादिति त्रेधार्थोऽभिप्रेत इति भावेनाह ॥ न तावत्प्रत्यक्षमित्यादिना ॥ भाष्ये सौत्रोदासीनशब्दव्याख्यानरूपं 'हेयोपादेयबुद्धिवर्जिताना'मिति हेतुगर्भ-विशेषणमयुक्तम् । तद्वर्जितानामपि तंत्वादीनां हेतुत्वादित्याशंक्य तद् बुद्धिविषयतावर्जितत्वं भाष्ये विवक्षितम् । तंत्वादयश्च तद्बुद्धिविषया एवेति न दोष इत्याह ॥ हेयोपादेयबुद्धिविषयतावर्जितत्वादिति ॥ भाष्यस्थं खपुष्पाद्यन्यबौद्धाभिमतशून्यप्रतिपादकम् 'अन्यत्रे'ति पदं 'कार्यसिद्धि'रित्यनेनानुषक्तेनान्वयार्थे पंचम्यर्थत्वेन व्याचष्टे ॥ अन्यत्र शून्यादिति ॥ यदत्रोक्तमुभाभ्यां 'समुदाय इत्याद्युदासीनानामित्यन्तं सूत्रदशकमेकमधिकरणम् । वैभाषिकसौत्रांतिकमतांतरनिरासकमिति तन्न । मम रीत्या 'नासत' इत्यादि सूत्रचतुष्टयस्यावश्यनिरसनीयशून्यवाद-निरासकत्वेन भिन्नाधिकरणत्वसंभवे एकत्वायोगात् । यत्त्वन्य आहुः योय-मणुहेतुको भूतभौतिक[शरीर]रूपो नदीसमुद्रादिर्बाह्यस्संघातो यश्च चित्त-चैत्यात्मक आध्यात्मिकस्संघातस्तस्मिन्नुभयहेतुकेऽपि समुदायेऽभिप्रेयमाणे तदप्राप्तिः समुदायाप्राप्तिः । समुदायिनामचेतनत्वात् । मृद्दंडचक्रादीनां हि संघातश्चेतनाधीनो दृष्ट इत्याद्यार्थ इति ।

यच्च केचिदाहुः योयमणुहेतुको भूतसमुदायो यश्च भूतहेतुको भौतिक-समुदायस्तस्मिन्नुभयहेतुकेऽपि समुदाये समुदायप्राप्तिर्न युक्ता । समुदायि-

नामणूनां क्षणिकत्वाभ्युपगमादित्याद्यार्थ इति। तन्न। तथात्वे 'प्रतिसंख्याप्रतिसंख्यानिरोधाप्राप्तिः' इत्यादिवदुभयहेतुसमुदायाप्राप्तिरित्येव सूत्रणीयत्वेन समुदाये उभयहेतुके इति सप्तम्योः अपिशब्दस्य तदप्राप्तिरित्यत्र तच्छब्दस्य च व्यर्थत्वात्। मम मत इव सूत्रे हेतुसूचनाभावेन न्यूनत्वाच्च। मम मते समुदाय एकैकहेतुके विरोधः। एकस्मात् समुदाय इत्यस्य व्याहतेः। उभयहेतुकत्वपक्षेऽपि समुदाये विरलोभयहेतुके समुदायस्सदा स्यात्। मिलितोभयहेतुकेऽन्योन्याश्रय इति युक्तिः सूत्रारूढा। तव तु न। किञ्च त्वत्पक्षे उत्तरसूत्रे इतरेतरप्रत्ययत्वादिचेदिति शंका न युक्ता। न हि संहन्तुश्चेतनस्याभावात्संघातो न युक्त इत्युक्ते त्वदुक्तमविद्यासंस्कारजरामरणशोकादीनामन्योन्यं हेतुहेतुमद्भावेन पूर्वापरीभूततया घटीयन्त्रवदनिशमावर्तमानत्वरूपमितरेतरप्रत्ययत्वं शंकार्हम्। अत एव द्वितीयसूत्रार्थोऽप्ययुक्तः। यच्चोक्तमेकैकहेत्वधीनं कार्योत्पादं स्वीकृत्य समुदायाधीनः स द्वितीये दूषितः। तृतीये त्वेकैकहेत्वधीनोऽपि स दूष्यत इति तन्न। समुदायाधीनकार्योत्पादनिरासकेन पूर्वोक्तेन चेतनाभावेनैवैकैकाधीनस्यापि तस्य 'पयोंबुव'दित्युक्तन्यायेनैव निराससंभवात्। चतुर्थे तु 'यौगपद्यमन्यथे'त्यस्य 'उत्तरोत्पादे च पूर्वनिरोधा' दिति तृतीयेन गतार्थता। तत्राप्यन्यथा यौगपद्यं स्यादिति विपक्षे बाधकविवक्षां विनोत्तरोत्पादे पूर्वनिरोधस्यासिद्धेः। मम मते तु कार्याणां यौगपद्यमिह विवक्षितम्। न तु त्वन्मत इव कार्यकारणयोः।

यच्चोक्तं प्रतिसंख्याविनाशोऽप्रतिसंख्याविनाशश्च वैनाशिकैर्निरन्वयः स्वीकृतः। स न युक्तः। कुन्डलादिविनाशे सुवर्णाद्यन्वयाविच्छेदात्। तप्तशिलातलपतितजलबिन्दुविनाशोऽपि न निरन्वयः। यतः—

उदबिन्दौ च सिंधौ च तोयभावो न भिद्यते।
विनष्टेपि ततो बिन्दावस्ति तस्यान्वयोंबुधौ॥

इति पञ्चमार्थ इति। तन्न। मम रीत्याऽध्याहारं विना निरोधस्वरूपनिरासकत्वे संभवत्यध्याहारेण निरन्वयत्वविशिष्टनिरोधनिरासकत्वायोगात्। त्वदभिप्रेतमूलाविद्याविनाशस्य निरन्वयत्वाच्च।

यच्चोक्तं अविद्यादिविनाशस्तत्वज्ञानादिना वा स्वयमेव वा । आद्ये निर्हेतुर्नाश इति मतहानिः । द्वितीये मोक्षसाधनोपदेशोऽनर्थक इति षष्ठार्थ इति तन्न । बाह्यैः स्वाभाविकस्य क्षणविनाशस्य निर्हेतुकत्वेऽपि नैमित्तिकस्य संतानविनाशस्य निर्हेतुकत्वास्वीकारात् ।

यच्चोक्तं आकाशे चायुक्तो निरुपाख्यत्वाभ्युपगमः । प्रतिसंख्याप्रतिसंख्यानिरोधयोरिवाकाशेऽपि वस्तुत्वप्रतिपत्तेरविशेषादिति सप्तमार्थः । अष्टमस्य तु अहमर्थस्य प्रतिक्षणं भेदे स्मृतिर्न स्यात् । अनुभवितुरेव स्मर्तृत्वादित्यर्थ इति तन्न । मम रीत्या सप्तमाष्टमयोः क्षणभङ्गविरोधिस्थायित्वरूपैकसाध्यान्वयस्याष्टमस्थचशब्दानुगुणस्य संभवे पृथक्साध्याध्याहारायोगात् । मम रीत्या स एवाहं तदेवेदमित्यात्मानात्मसाधारणेन प्रत्यभिज्ञानेन विप्रतिपन्नस्य सर्वस्थायित्वस्य साक्षात् साधनसंभवे स्मृत्यनुभवयोः सामानाधिकरण्यान्यथानुपपत्याऽऽत्ममात्रस्थायित्वसाधनायोगात् । कथं च प्रत्यहं सुषुप्तिदशायामहमर्थनाशं वदतस्तव मते स्मृत्यनुभवयोः सामानाधिकरण्यम् । कथं वा स एवाहमिति प्रत्यभिज्ञा । कथं च दृष्टिसृष्टिमते तदेवेदमिति प्रत्यभिज्ञा । कथं च तस्या भ्रांतित्वे क्षणिकत्वनिरासः । यदि चाप्रतीतिदशायामपि घटादिरस्ति तर्हि न मिथ्या ।

यच्चोक्तं यद्यपि वैभाषिकसौत्रांतिकाभ्यामसतः कारणत्वं न स्वीकृतम् । तथापि हेतोः कार्योत्पादने निरपेक्षत्वे पुंव्यापारवैयर्थ्यम् । सापेक्षत्वं तु क्षणिकस्य न युक्तम् । न च सापेक्षत्वनिरपेक्षत्वाभ्यामन्या विधास्तीत्यर्थादापन्नमसतः कारणत्वं 'नासत' इत्यादिसूत्रद्वयेन निरस्यत इति तन्न । मम रीत्याऽवश्यनिरसनीयस्य शून्यवादिना स्वयमेवांगीकृतस्यासत्कारणत्वस्य निराससंभवे वैभाषिकमतेऽर्थादापन्नस्य निरासायोगात् । यदि तु नासत इत्यत्राभावस्य कारणत्वं निषिध्येत तदाऽदृष्टत्वादिति हेतुरयुक्तः । विहिताकरणविशेषादर्शनादीनां प्रत्यवायभ्रमादिहेतुत्वदर्शनात् ।

यच्चोक्तं उदासीनानामनीहमानानां जनानामभिमतसिद्धिः स्यादिति

दशमार्थ इति तन्न। त्वदुक्तातिप्रसंगस्य त्वदभिमतहृष्टिसृष्टावपि समत्वात्। किञ्च एवं हि इहाभावेऽपि कार्योत्पत्तौ बाधकमुक्तं स्यात्। न त्वसतः कार्योत्पत्तौ। तत्र चेष्टापत्तिः। क्वचिदनीहमानस्यापीष्टसिद्धेः। ततो वरं मम रीत्योदासीनशब्देन हेयोपादेयबुद्ध्यविषयखपुष्पादीँल्लक्षयित्वा तेभ्यः कार्यसिद्ध्यापादनम्। तेन सतः कारणत्वस्य साक्षात् सिद्धेः। न च मम सकाशादिति पदाध्याहारदोषः। उदासीनानां संबंधिकार्यसिद्धिरिति षष्ठ्यर्थसंबंधस्यैव भाष्ये सकाशपदेन विवृतत्वात्। यच्चोक्तं शून्यवादस्यातिप्रमाणविरुद्धत्वात्सूत्रेन तन्निरास इति तन्न। त्वदुक्तस्य शून्यस्य त्वया निर्विशेषब्रह्मशब्देन संवृतेश्चाविद्याशब्देन—

'इदं वस्तुबलायातं यद्वदंति विपश्चितः।
यथा यथार्थाश्चित्यन्ते विशीर्यंते तथा तथा॥
बुद्ध्या विविच्यमानानां स्वभावो नावधार्यते।
अतो निरभिलाषास्ते निःस्वभावाश्च देशिता'॥

इति तदुक्तस्य विचारासहत्वस्य त्वयाऽनिर्वचनीयशब्देनोक्तेः। द्वैतग्राहिप्रत्यक्षादीनां सांवृतिकसत्यविषयत्वेन पारमार्थिकाद्वैताविरोधित्वमिति चोभाभ्यामुक्तत्वात्। मिथ्याभूतस्वर्गादेर्व्यावहारिकं सत्त्वं नाम सत्त्वेन व्यवहारमात्रम्। न त्वर्थगतं सत्त्वमस्तीति त्वयापि वक्तव्यतयार्थात्स्वर्गादिविषयवेदाप्रामाण्यस्वीकारात्। दीर्घभ्रांतिहेतुत्वेन चातिशयिताप्रामाण्यस्यैवापातात्। सत्यज्ञानादिवाक्यस्य पराभिप्रेतशून्यलक्षकतायास्त्वयैवोक्तत्वादद्वयवादीति बौद्धसंज्ञायाश्च त्वयाऽद्वैतवादीति धारणाच्च शून्यवादस्य त्वदभिप्रेतसिद्धांतत्वेनातिप्रामाणिकत्वात्॥

॥ इति असदधिकरणम्॥ ८॥

---

## अथ अनुपलब्ध्यधिकरणम्

## ॥ ॐ न भावोऽनुपलब्धेः ॐ॥

'नाभाव उपलब्धे'रिति पूर्वसूत्र इवात्रापि सूत्रे कर्तृसाधनेन

भावशब्देन सद्रूपं ज्ञानमुच्यते । विज्ञानवादे ज्ञानादन्यस्यासत्त्वात् । ज्ञानमित्यनुक्त्वाभाव इत्युक्तिस्तु 'नासतो दृष्टत्वा'दिति शून्यवादिनं प्रत्युक्तो दोषो नास्माकमिति पूर्वपक्षोत्थानार्थमिति द्रष्टव्यम् ।

केचित्तु प्राप्तौ भूक्शुद्धिचिंतयोरिति वचनाच्चिंतात्मकज्ञानार्थोऽपि भूधातुरस्तीति वा वः युष्माकं भाः साकारत्वेनाभिमतं ज्ञानमिति वाभिप्रेत्य भाव इत्युक्तिरित्याहुः । अत एव भाष्ये 'न विज्ञानमात्रं जग'दिति टीकायां च 'न विज्ञानातिरिक्तं जग'दित्युक्तम् । ननु तार्किकमते स्ववृत्तिविरोधः । न तु सिद्धांते । साक्षिणस्स्वप्रकाशत्वांगीकारादिति पूर्वत्रारुच्या दोषांतरमाह ॥ अज्ञाने व्यभिचारश्चेति ॥ ज्ञानप्रागभावादौ ज्ञानावरणे संवृतौ च व्यभिचारः । नहि ज्ञानाभावादिरपि ज्ञानम् । विरोधादिति भावः ॥ अधिकारिणं प्रतीति ॥ प्रतिवादिना बौद्धेन श्रुत्यादिप्रामाण्यस्वीकारेऽपि शास्त्रेऽधिकृतं मुमुक्षुं प्रति तदंगीकृतप्रामाण्येन श्रुत्यादिना विरोध उच्यत इत्यर्थः । यच्चोक्तं परैः 'नाभाव उपलब्धे'रित्यादिसूत्रपंचकमेकमधिकरणं विज्ञानवादनिरासकमिति तन्न । 'नासत' इत्यादिसूत्राभ्यां शून्यपरिणामे निरस्तेऽवशिष्टमवश्यनिरसनीयं शून्यविवर्तत्वमनिरस्यान्यनिरासानवसरात् । किञ्चाद्यद्वितीयसूत्रे त्वयापि 'किं पुनर्वैधर्म्यंबाधाबाधाविति ब्रूम' इत्यादिना जगत्सत्यत्वसाधनेन व्याख्याते इति त्वन्मतविरुद्धे । ननु योगाचारस्य नीलपीतादिर्ज्ञानाकार एव । न तु बाह्योऽर्थोऽस्ति । तत्र बाह्यार्थानुभवविरोधः सूत्र उक्तः । मम तु नीलपीतादिर्मिथ्याभूतो बाह्य एव । न तु ज्ञानाकार इति न सूत्रविरोध इति चेन्न । 'नाभाव उपलब्धे'रिति सूत्रे उपलंभेन बाह्यार्थमिथ्यात्वस्यैव निषेधात् । ज्ञानाकारत्वनिषेधे हि न ज्ञानमनुपलब्धेरिति सूत्रणीयम् । किञ्च तत्तदाकारवृत्त्या तत्तदज्ञाननिवृत्तिरिति वदतस्तव मतेऽपि ज्ञानं साकारमेव । किञ्च बाह्यार्थस्यानिर्वचनीयत्वं सूत्राभिमतं चेत्स्वप्नवैधर्म्योक्तिरयुक्ता । स्वप्नस्याप्यनिर्वचनीयत्वात् । व्यवहारदशायां बाधाभावमात्रेण च तद्वैधर्म्यविवक्षायां विज्ञानवादोप्यनिरस्तः स्यात् । तन्मतेऽपि जगतो व्यवहारदशायामबाधात् । किञ्च विज्ञानविवर्त इति

मतेऽधिष्ठानभूतज्ञानस्य मिथ्याभूतबाह्यार्थात्मनाधीस्तत्वतो बाह्यार्थभावश्च द्वयोः सम एव। ननु तस्यार्थोत्यंतासन्। मम तु सदसद्विलक्षण इति चेन्न। तथापि स्वप्नवैधर्म्योक्त्ययोगात्। सत्त्वानुभवविरोधस्योभयत्र साम्यात्। सत्त्वाभावादन्यस्यासत्त्वस्याभावाच्च। अपरोक्षधीविषयत्वार्थक्रियाकारित्वादिरूपस्य सांवृतिकसत्त्वरूपस्य चासद्वैलक्षण्यस्य परमतेऽपि भावात्। परमार्थसत्त्वादिरूपस्य च तस्य त्वन्मतेऽप्यभावात्।

यच्चोक्तं न भावो वासनानां युक्तः। विज्ञानवादे बाह्यार्थानामसत्त्वेनानुपलब्धेः। उपलब्धेषु हि वासनेति तृतीयार्थ इति। तत्र हेतुसाध्ययोर्वैयधिकरण्यम्। वासनानामित्यध्याहारश्च। असत्त्वेनानुपलब्धिं वदता लाघवेन सत्त्वमेवोपलब्धौ तंत्रमिति वक्तव्यतयाऽनिर्वाच्य पक्षेपि दोषसाम्यं च। मम तु जगन्न भावः न ज्ञानं तथानुपलब्धेरिति सामानाधिकरण्यम्। पूर्वसूत्रप्रकृतजगत एवानुषंगादनध्याहारश्च। [समानार्थौ 'ऋदोर'बित्यप्प्रत्ययांतो भवशब्दो भावार्थघञ्प्रत्ययांतो भावशब्दश्च। उपसर्गो धातुगतशक्तिद्योतक एवेतिभावेन सूत्रेऽन्वित्युपसर्गस्याप्रयोगः] यच्चोक्तं नालयज्ञानं संस्काराश्रयः। क्षणिकत्वादिति चतुर्थार्थ इति तन्न। मम रीत्येह विज्ञानवाद्यसाधारणस्यार्थो ज्ञानाकार इत्यस्य दूषणसंभवे क्षणिकत्वप्रयुक्तसंस्काराभावस्य बौद्धमतसाधारणस्योक्त्ययोगात्। केचित्तु पंचमं शून्यवादिनिरासकमित्याहुः। तन्न। नासत इत्यत्रैव शून्यवाद्युक्तासत्कारणत्वनिरासप्रतीतेः। इह च शब्दास्वारस्याच्च। ॥ इति अनुपलब्ध्यधिकरणम् ॥ ९ ॥

---

## अथ नैकस्मिन्नधिकरणम्

## ॥ ॐ नैकस्मिन्नसंभवात् ॐ ॥

सदसदुभयमित्यादि ॥ तत्र सदित्याद्यः प्रकारः। असदिति द्वितीयः। उभयं सदसदात्मकमिति तृतीयः। उभयविलक्षणमिति

चतुर्थः । सदसदुभयविलक्षणमिति पंचमषष्ठौ । तत्र सत्त्वद्विलक्षणं चेति पंचमः । असत्त्वद्विलक्षणं चेति षष्ठः । सर्वं सदसदात्मकं नैतत् सर्वं सदसद्विलक्षणमिति सप्तम उक्त इति द्रष्टव्यम् । स्यादस्ति स्यान्नास्ति स्यादस्ति च नास्ति च स्यादवक्तव्यं स्यादस्ति चावक्तव्यं च स्यान्नास्ति चावक्तव्यं च स्यादस्ति च स्यान्नास्ति चावक्तव्यं चेति हि क्षपणका आहुः । अत्र च स्याच्छब्दस्तिङंतप्रतिरूपकानेकांतद्योतको निपातः । यथाहुः । 'वाक्येष्वनेकांतद्योती गम्यं प्रति विशेषणम् ।
स्यान्निपातोऽर्थयोगित्वात् तिङन्तप्रतिरूपक' इति ।

एवं च सत्त्वमसत्त्वं सदसत्त्वं सदसद्विलक्षणत्वं सत्त्वे सति तद्विलक्षणत्वमसत्त्वे सति तद्विलक्षणत्वं सदसत्त्वे सति तद्विलक्षणत्वमित्यनियतसप्तप्रकारं विश्वम् । एवं नित्यत्वभिन्नत्वादावपि सप्तप्रकारा ऊह्याः ।

उक्तं हि 'तद्विधानविवक्षायां स्यादस्तीति गतिर्भवेत् ।
स्यान्नास्तीति प्रयोगस्स्यात्तन्निषेधो विवक्षित' ।

इत्यादि । टीकायां तु—

'आह क्षपणको विश्वं सदसत्द्वयमद्वयम् ।
द्वयाद्वयमतत् सर्वं सप्तभंगि सनातनम् ॥'

इत्यनुव्याख्यानानुसारेण संक्षिप्योक्तम् । अत्राद्यतृतीयसूत्रयोरस्माकं परेषां च प्रमेये योजनायां चाविरोधः । यत्तूक्तं परैः यथैकस्मिन् सप्तभंग्यसंभव एवमात्मनो देहपरिमाणत्वे अकार्त्स्न्यं परिच्छिन्नत्वं स्यात् । ततश्चानित्यत्वं स्यादिति द्वितीयार्थ इति तन्न । मम मत इव सूत्रे जैनमतप्रसंगसन्निधापितदेहपरिमाणत्वरूपापादकसूचनाभावेन न्यूनत्वात् । जैनमतप्रसंगसन्निधापितत्वादेवंशब्देन देहपरिमाणत्वपरामर्शोऽयुक्तः । देहपरिमाणत्वेनैवानित्यत्वापादनसंभवेन मध्य आत्माकार्त्स्न्यापादनवैयर्थ्याच्च । यच्चोक्तं मोक्षस्थस्यांत्यपरिमाणस्य नित्यत्व आदिमध्यपरिमाणयोरपि नित्यत्वप्रसंगादिति वा आदिमध्यावस्थयोरंत्यपरिमाणस्य स्थितिप्रसंगादिति वा चतुर्थे 'उभयनित्यत्वा'दित्यस्यार्थ इति तन्न । संसारस्यानादित्वेन परिमाणस्यावस्थायावाऽऽदित्वा-

योगात्। आद्याभावे मध्यमत्वस्याप्ययोगाच्च । द्वितीयपक्षे नित्यपदस्य स्थितिलक्षकत्वापाताच्च । तस्माट्टीकोक्तरीत्योभयशब्दो देहात्मपरः ॥

॥ इति नैकस्मिन्नधिकरणम् ॥ १० ॥

---

## अथ पत्युरधिकरणम्

## ॥ ॐ पत्युरसामंजस्यात् ॐ ॥

पंचममुखछेत्र इति ॥ सुधायां तु व्यत्ययमाश्रित्य ब्रह्मद्विषां शरवे हिंसकायेति व्याख्यातम् । दक्षप्रजापतिद्विष इति वा द्रष्टव्यम् । एषशब्दस्य आ ईश इति विग्रहः । शकारस्य व्यत्ययेन षकार इत्यभिप्रेत्याह ॥ आसमंतादीशस्येति ॥ सुधायां त्विच्छारूपस्येति व्याख्यातम् ॥ इति च न जगत्कारणत्वमिति ॥ इति हेतोश्च न कारणत्वमित्यर्थः । एते च संबन्धानुपपत्त्यादयो दोषाः शिवस्यानुमानेन शैवागमैश्च कारणत्वपक्ष आपाद्यन्ते । स्वमते तु 'आत्मनि चैवं विचित्राश्च हि। सर्वोपेता च तद्दर्शनात्। विकरणत्वान्नेति चेत्तदुक्तम्' इत्यादिसूत्रेषु श्रुतिबलादेवैते दोषा उद्धृताः । शिवस्य तु न श्रुतिभिर्जगत्कारणत्वम् । सर्वश्रुतीनां विष्णावेव समन्वयस्योक्तत्वात् । उत्तराधिकरणेप्येतदनुसंधेयम् । अत्र यदुक्तमन्यैः ईश्वरः कर्तैव न तु उपादानमिति वदतां तार्किकसेश्वरसांख्ययोगमाहेश्वराणां मतमत्र निरस्यत इति तन्न । केवलकर्तृत्वमेव श्रुतिसूत्रसंमतमित्युक्तत्वात्। किञ्च उपादाननिमित्ताभेदः प्रकृत्यधिकरणे निरस्तः। न चेह तद्भेदे दोषः सूत्र उक्तः । प्रत्युत हेयजगदुपादानत्व एवेश्वरस्यासामंजस्यम् । तार्किकमतं शास्त्रयोनिसूत्रे सामान्येन 'महद्दीर्घवद्वे'त्यत्र विशिष्य च निरस्तम्। योगमतं तु 'एतेन योगः प्रत्युक्त' इत्यत्र विशिष्य निरस्तम् । सेश्वरसांख्यमतं तु सांख्यपरीक्षायां निरस्तमितीह परिशेषात्पाशुपतमतमेव निरस्यमिति वरम् । यच्चोक्तमाद्यसूत्रे 'असामंजस्या'दित्यस्य हीनमध्योत्तमभावेन प्राणिनिर्माणादीश्वरस्य रागद्वेषाख्यदोषप्रसङ्गादित्यर्थ इति तन्न ।

'नोपादेयं मतं ह्यस्य देवस्य स्तुहिगर्तगम् ।
उत्पिपेष शिरस्तस्य गृणीषे सत्पतिं पदम् ॥
यद्विष्णोरुपमं हंतुं रुद्रमाकृष्यते मया ।
धनुर्यं कामये तंतमुग्रं मा शिश्नदेवताः ।
घ्नन् शिश्नदेवानेकोसावासीन्नारायणः परः ।
तस्माद्रुद्रः संप्रसादश्चाभूतां वैष्णवं मखम् ।
यज्ञेन यज्ञमयजंताबध्नन्पुरुषं पशुम् ।
यो भूतानामधिपती रुद्रस्तंतिचरो वृषा ।
इत्यादिश्रुतिसामर्थ्यात् पारतन्त्र्यं जनिर्मृतिः ।
पराधीनपदप्राप्तिरज्ञत्वं प्रलयेऽभवः ।'

इत्यनुव्याख्यानोक्तरीत्या पारतन्त्र्यादिरूपास्वव्याघातकसिद्धरूपदृढहेतुपरत्वे संभवति स्वव्याघातकप्रसङ्गरूपादृढहेतुपरत्वायोगात् । ननु मम मते श्रुत्यनुसारेण कर्मसापेक्षत्वादीश्वरस्य रागाद्यप्रसङ्ग इति न स्वव्याघातः। परस्यापि तथा चेत् श्रुत्यनुसारेणोपादानतापि स्यादिति चेन्न । त्वन्मतेऽपि विशिष्टचिद्रूपस्येश्वरस्य जीवभ्रांतिकल्पितत्वेन जीवकर्मापेक्षायोगात् ।

यच्चोक्तं सर्वगतत्वान्निरवयवत्वाच्चेश्वरस्य प्रधानादिना सह संयोगस्याश्रयाश्रयिभावाभावेन समवायस्य चायोगान्न तदधिष्ठातृत्वम् । मम त्वनिर्वाच्यस्तादात्म्यलक्षणः संबन्धोस्तीति द्वितीयार्थ इति तन्न । सर्वज्ञस्येश्वरस्य स्वस्मिन् जगत्तादात्म्यभ्रमाभावात् । [अधिष्ठानानुपपत्ते'रित्युत्तरसूत्र एव स्वप्रधानस्याधिष्ठेयत्वाभावसाधकानां अप्रत्यक्षत्वादीनामिवासंबन्धत्वस्यापि विवक्षितुं शक्यत्वेनैतत्सूत्रवैयर्थ्यात् । तादात्म्यसंबन्धेनाधिष्ठानत्वस्य क्वाप्यदृष्टेश्च । सर्वज्ञस्येश्वरस्य स्वस्मिन् जगत्तादात्म्यभ्रमाभावाच्च । यच्चोक्तमप्रत्यक्षत्वात्प्रधानपरमाण्वादेरीश्वरस्य तदधिष्ठातृत्वानुपपत्तेरिति तृतीयार्थ इति तन्न । कर्तृत्वानुपपत्तेः साध्यत्वेन हेतूकरणायोगात् । परमाण्वादेरीश्वरं प्रति प्रत्यक्षत्वाच्च । अत एव यदुक्तं यथा ह्यप्रत्यक्षं चक्षुरादिकरणं जीवोऽधितिष्ठत्येवमीश्वरो प्रत्यक्षं प्रधानादीति चतुर्थे शंकाभागार्थ इति तन्निरस्तम् । ईश्वरं प्रति प्रधानादेरप्रत्य-

क्षत्वाभावेन शंकानुदयात् । मम त्वात्मनस्तत्तत्कार्यजनने शरीरस्य सह-कारित्वात्तत्र करणशब्दो युक्तः ।

यच्चोक्तमीश्वरो जीवादीनियत्तया परिच्छिनत्ति न वा । आद्ये तेषां परिमितत्वरूपमंतवत्त्वं स्यात् । तथा च तेषां सर्वेषां मुक्तौ शून्यवादा-पातः । जडस्यापि जीवार्थमेव सृष्टेः । अंत्ये ईश्वरस्यासार्वज्ञमिति पञ्चमार्थ इति तन्न । सर्वमुक्तावपि चेतनानां जडानां च नित्यानां सत्त्वेन शून्य-वादाप्रसङ्गात् । कार्याभावस्य चेष्टत्वात् । तव मत एव कल्पितस्य चिन्मात्रादन्यस्येश्वरादेः कालादेर्वेदादेः कर्मसृष्टिप्रलयादिप्रवाहस्य च कदाचिन्निःशेषनिवृत्त्यवश्यंभावेन शून्यवादापातात् । जीवादीनामसंख्य-त्वेनाविद्यमानाया इयत्ताया अज्ञाने सार्वज्ञाहानेश्च । न च द्रव्यत्वादिना जीवानां ससंख्यत्वं साध्यमिति भामत्युक्तं युक्तम् । परमाण्वादौ घटादौ च व्यभिचारादप्रयोजकत्वात्स्वव्याघातकत्वाच्च । मम रीत्यां तवत्त्वस्याद्य-सूत्रप्रकृतेश्वरधर्मिकत्वे 'असर्वज्ञता वे'ति वैकल्पिकेनासर्वज्ञत्वेन सामा-नाधिकरण्ये च संभवति जीवादीनामिति धर्म्यध्याहारस्य वैयधिकरण्यस्य चायोगाच्च । ॥ इति पत्युरधिकरणम् ॥ ११ ॥

---

## अथ शाक्ताधिकरणम्

## ॥ ॐ उत्पत्त्यसंभवात् ॐ ॥

अन्ये तु पञ्चरात्रे यदुच्यते वासुदेवात्संकर्षणनामा जीवो जायत इति तन्न । जीवानादित्वस्य श्रुत्यादिसिद्धत्वेन कृतहानाकृताभ्यागमादि-प्रसङ्गेन च जीवोत्पत्त्यसंभवादित्याद्येनोक्त्वा यच्चोच्यते संकर्षणाख्या-ज्जीवात्प्रद्युम्नो नाम मनो जायत इति तदपि न । न हि कर्तुः करण-मुत्पद्यमानं दृश्यते । कर्ता च जीवः करणं च मन इति द्वितीयेनोक्त्वा अथ संकर्षणादयो न जीवरूपाः । किन्तु परमात्मरूपा एवेति तेषामपि तद्वदेव ज्ञानैश्वर्यादिसद्भाव इति मतम् । तथाप्युत्पत्त्यसंभवस्याप्रतिषेध

एव। सर्वेषां भगवद्रूपत्वेनातिशयाभावात्। भवितव्यं हि कार्यकारणयोरतिशयेनेति तृतीयेनोक्त्वा परस्परं वेदेन च विप्रतिषेधश्चास्मिन्शास्त्रे दृश्यते। ज्ञानैश्वर्यादीनां क्वचिद्गुणत्वोक्तेः क्वचिच्च स्वरूपत्वोक्तेः। चतुर्वेदेषु परं श्रेयोऽलब्ध्वा शांडिल्य इदं शास्त्रमधीतवानित्यादि वेदनिंदादर्शनाच्चेति चतुर्थेनोक्तम्। तथा च पञ्चरात्राप्रामाण्यप्रतिपादकमिदमधिकरणमित्याहुः। तन्न।

'ऋग्वेदो यजुर्वेदः सामवेदोथर्वांगिरस इतिहासः पुराणं विद्या उपनिषदः श्लोका इति श्रुत्या 'इतिहासपुराणः पञ्चमो वेदानां वेद' इत्यादिश्रुत्या च विरोधात्। 'कृतं शतसहस्रं हि श्लोकानां हितमुत्तम-' मिति भारते पञ्चरात्रस्य निरुपपदश्लोकशब्देनोक्तेः।'

'भारतं पञ्चरात्रं च मूलरामायणं तथा।
इतिहास इति प्रोक्तं ब्राह्माद्यं तु पुराणकम्॥'

इति पाद्मे पञ्चरात्रस्येतिहासत्वोक्तेः

'वेदेन पञ्चरात्रेण भक्त्या यज्ञेन चैव हि।
दृश्योऽहं नान्यथा दृश्यो वर्षकोटिशतैरपि॥'

इति वाराहोक्तेः

'ऋग्यजुस्सामाथर्वाश्च भारतं पञ्चरात्रकं।
मूलरामायणं चैव शास्त्रमित्यभिधीयते॥
यच्चानुकूलमेतस्य तच्च शास्त्रं प्रकीर्तितम्।
अतोऽन्यो ग्रन्थविस्तारो नैव शास्त्रं कुवर्त्म तत्॥'

इति च स्कांदोक्तेः

'ऋगाद्या भारतं चैव पञ्चरात्रमथाखिलम्।
मूलरामायणं चैव पुराणं चैतदात्मकम्॥
ये चानुयायिनस्तेषां सर्वे ते च सदागमाः।
दुरागमास्तदन्ये ये तैर्न ज्ञेयो जनार्दन॥'

इति च ब्रह्मांडेनोक्तेः

'वेदार्थपूरकं ज्ञेयं पञ्चरात्रं यतोऽखिलं।

तत्संक्षेपश्च गीतेयं तस्मान्नास्याः समं क्वचित् ॥'

इति च ब्रह्मवैवर्तोक्तेः, भारते

'सांख्यं योगः पाशुपतं वेदारण्यकमेव च ।
ज्ञानान्येतानि भिन्नानि उताहो नेति चोच्यता'मिति पृष्टे
'सांख्यं योगः पाशुपतं वेदारण्यकमेव च ।
ज्ञानान्येतानि भिन्नानि नात्र कार्या विचारणा ॥'

इति सांख्यादीनां परस्परं विरुद्धत्वमुक्त्वा

'पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम् ।
ज्ञानेष्वेतेषु राजेंद्र सर्वेष्वेतद्विशिष्यते ॥
पञ्चरात्रविदो मुख्या यथाक्रमपरा नृप ।
एकांतभावोपगता वासुदेवं विशंति ते ॥'

इति प्राग्वेदारण्यशब्दोपलक्षितस्य पञ्चरात्रस्य विशेषोऽक्त्यार्थात् प्रामाण्योक्तेश्च । विस्तृतं चैतत् प्रथमसूत्रभाष्यादौ । तथा भारत एव

'इदं महोपनिषदं चतुर्वेदसमन्वितम् ।
सांख्ययोगकृतांतेषु पञ्चरात्रानुशब्दितम् ॥
इदं श्रेय इदं ब्रह्म इदं हितमनुत्तमम् ।
ऋग्यजुस्सामभिर्जुष्टमथर्वांगिरसैस्तथा ।
भविष्यति प्रमाणं वै एतदेवानुशासनम् ॥'

इति साक्षात्प्रामाण्यवेदमूलत्वयोः तथा 'अस्मात्प्रवक्ष्यते धर्मा न मनुः स्वायंभुवः स्वय'मिति मन्वादिस्मृतीनामपि पञ्चरात्रमूलकत्वस्य तथा 'वेदैश्चतुर्भिः संमितं कृतं मेरौ महागिरा'विति सर्वमुनिजनसंकुले पुण्यदेशे प्रवर्तितत्वस्य तथा

'तत्र प्रशासतो राज्यं धर्मेणामित्रघातिनः
नानृता वाक्समभवन्मनो दुष्टं च नाभवत् ।
संस्थिते तु नृपे तस्मिन् शास्त्रमेतत् सनातनम्
अंतर्धास्यति तत्सर्वमेतद्वः कथितं मया ॥'

इति सत्काले प्रवृत्तेर्दुष्काले तिरोधानस्य तथा

'श्रुत्वा ब्रह्ममुखाद्रुद्रः स देव्यै कथयन् पुन'रिति ।

['एकाग्रमनसो दांता ऋषयः समयेरिताः ।
दिव्यवर्षसहस्रांते सर्वे ते मुनयः समम् ॥
नारायणानुशिष्टा हि तदा देवी सरस्वती ।
विवेश तानृषीन् सर्वान् लोकानां हितकाम्यया ॥']

'ऋषीनुवाच तान्सर्वानदृश्यः पुरुषोत्तमः ।
कृतं शतसहस्रं हि श्लोकानां हितमुत्तम'मिति ।

'उशना बृहस्पतिश्चैव यदोत्पन्नौ भविष्यतः ।
तदा प्रवक्ष्यतः शास्त्रं युष्मन्मतिभिरुद्धृतम् ।
युष्मत्कृतमिदं शास्त्रं प्रजापालो वसुस्ततः ।
बृहस्पतिसकाशाद्वै प्राप्स्यति द्विजसत्तम ।'

इत्यादिना शिष्टपरिग्रहस्य तथा 'वक्ता नारायणः स्वय'मिति वक्तुर्भ्रांत्याद्यभावस्य 'हितकाम्यये'त्यादिना विप्रलिप्साभावस्य चोक्तेः ।

एतेन पाशुपतादिप्रतिबन्दी निरस्ता । तेषां श्रुतिस्मृतिषु प्रामाण्याद्यनुक्तेः । प्रत्युत तत्प्रतिषेधात् । उक्तं चैतत् 'स्मृत्यनवकाशे'त्यत्र । ननूक्तानि श्रुत्यादीन्यविरुद्धविषयाणि । जीवोत्पत्तिस्तु श्रुत्यादिविरुद्धा । अत एव सांकरभाष्येऽपि वासुदेवतदाराधनादावन्यत्र सर्वत्र पञ्चरात्रप्रामाण्यमुपेत्य वेदविरुद्धजीवोत्पत्त्यादावेवाप्रामाण्यमुक्तमिति । तन्न ।

'अविरोधे श्रुतिर्मूलं न मूलांतरसंभवः ।
विरोधे त्वन्यमूलत्वमिति स्यादर्धवैशसम् ।
कठमैत्रायणीयादिपठितश्रुतिमूलिकाः ।
दृश्यंते स्मृतयस्सर्वा य(थो)दोपनयनादिषु(काः) ।
तदा तन्मध्यपात्येकं वाक्यं किञ्चिदपश्रुतिः ।
मूलांतरोद्भवं वक्तुं जिह्वा नो न प्रवर्तत' ।

इति भाट्टोक्तेस्तन्मतानुसारिणा त्वयाप्यन्यत्र सर्वत्र श्रुतिसंवादिन्याः श्रुतिस्मृतिपरिगृहीतायाश्च पञ्चरात्रस्मृतेः श्रुतिविरुद्धांशे गौणार्थत्वस्यैव वक्तव्यत्वेनाप्रामाण्योक्त्ययोगात् ।

उक्तं च कल्पतरावपि

'बुद्धिपूर्वकृतिः पंचरात्रं निश्वसितं श्रुतिः ।
तेन जीवजनिस्तत्र सिद्धा गौणी नियम्यते' इति

नचेदमेवाप्रमाण्यम् । 'गौण्यसंभवा'दित्यादौ श्रुतेरपि श्रुत्यंतरविरोधेन गौणार्थताया वक्ष्यमाणत्वात् । किञ्च 'यतो वा इमानि भूतानि जायंते । येन जातानि जीवंति । विज्ञानघन एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति । यथाग्नेः क्षुद्रा विस्फुलिंगा व्युच्चरंत्येवमेवास्मादात्मनः सर्वे प्राणाः सर्व एवात्मानो व्युच्चरंती'ति जीवोत्पत्त्यादि श्रूयते । नह्यचेतनस्य जीवनादि युक्तम् । श्रुतिर्देहयोगादिपराचेत्पंचरात्रमपि तथास्तु । श्रुतिष्विव पंचरात्रेऽपि

'अनादिकर्मणा बद्धो जीवः संसारमंडले ।
स ह्यनादिरनंतश्च परमार्थेन निश्चित' ।

इत्यादौ जीवनित्यत्वोक्तेः । प्रत्युत परपक्ष एव विशिष्टरूपो जीवो न नित्यः । जीवशब्दलक्ष्यं शुद्धं नित्यमिति चेत् जीवपदलक्षस्य जीवत्वेन जीवानित्यत्वतादवस्थ्यात् । त्वन्मते संसरणस्य दर्पणमालिन्यादिवदनित्य विशिष्टरूपप्रतिबिंबगतत्वेन बंधमोक्षयोर्वैयधिकरण्यादिदोषापत्तेश्च । अविद्यावच्छिन्नचैतन्यरूपस्य वा तत्प्रतिबिंबितचैतन्यरूपस्य वा जीवस्यानादित्वेप्यंतःकरणविशिष्टस्याहमर्थस्य प्रतिसर्गं प्रतिजागरणं चोत्पत्तेरहमर्थस्यैव च कर्तृत्वांगीकारात्त्वन्मत एव कृतहान्याद्यापाताच्च । एवं जीवान्मनस उत्पत्त्यसंभवदोषोऽपि परेषां पक्ष एव । तैः अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणी'त्यादिश्रुत्या ब्रह्मणो जीवरूपेणैव मनआदिजगत्स्रष्टृत्वस्य वक्तव्यत्वात् । वस्तुतस्तु 'वासुदेवात्संकर्षण' इत्यादिकं

'जीवाभिमानिशेषस्य नाम्ना संकर्षणस्य च ।
वासुदेवाज्जनिः प्रोक्ता प्रद्युम्नस्य ततस्तथा ।
मनोभिमानिनः कामस्यैवं साक्षाद्धरेः क्वचित् ।
संकर्षणादिनाम्नैव नित्याचिंत्योरुशक्तितः ।

व्यूह उक्तोन्यथानूद्य कथं दुष्टत्वमुच्यते '।

इत्यनुव्याख्यानोक्तरीत्यान्यपरम् । नतु जीवोत्पत्त्यादिपरम् । तत्तद्व्यापारार्थतत्तदधिकार्युपासनार्थं चाचिंत्यशक्तेर्भगवतः स्वेच्छया दशद्वादशचतुर्विंशत्यादिव्यूहरूपेणेव चतुर्व्यूहरूपेणाप्यवस्थानं युक्तम् । अन्यथा 'स एको भवति स त्रिधा भवती'त्यादिश्रुतिः

'सृष्ट्वा संकर्षणं देवं स्वयमात्मानमात्मना । '

'सृज त्वमात्मना कृष्ण प्रद्युम्नं चात्मसंभवम् ।
प्रद्युम्नाच्चानिरुद्धं तं यं प्राहुर्विष्णुमव्ययम् ।
अनिरुद्धोऽसृजत् सोयं ब्रह्माणं लोकधारिणम् ' ।

इत्यादि भारतादिवचनं चाप्रामाणं स्यात् । किञ्च त्वन्मते 'उत्पत्त्यसंभवा'दिति सामान्योक्त्यैव जीवोत्पत्त्यसंभववत्कर्तुः करणोत्पत्त्यसंभवस्यापि विवक्षितुं शक्यत्वात् द्वितीयसूत्रवैयर्थ्यम् । किञ्चैवं कर्तुश्च करणस्येत्येवसूत्रणीयम् । 'उत्पत्त्यसंभवादित्यनेनानुषक्तेनास्यान्वयसंभवात् । यथान्यासपक्षेपि ह्युत्पद्यतइत्येतदध्याहार्यम् । अध्याहाराच्चानुषंगो ज्यायान् । तृतीयेऽपि मम 'विज्ञानादिभाव'इत्यत्र द्वितीये प्रकृतस्य कर्तुरित्यस्यान्वयः । तव तु संकर्षणादीनामित्यध्याहारः । तदप्रतिषेध इति वक्रोक्तिवैयर्थ्यं च । स इत्येतावतैव प्रकृतस्योत्पत्त्यसंभवस्य परामर्शोपपत्तेः । मम तु तदप्रतिषेधः दूषितत्वेन सन्निहितस्य पाशुपतमतस्याप्रतिषेधः । अनुमतिः । तदंतर्भाव इत्यर्थः ।

किञ्च उत्पत्त्यसंभवभयात्संकर्षणादीनां जीवत्वं त्यक्त्वा परमात्मत्वं शंकमानेनोत्पत्तिवाक्यस्य प्रादुर्भावाभिप्रायतया अवश्यं विवक्षितत्वेन तं प्रत्युत्पत्त्यसंभवोक्तिरयुक्ता । चतुर्थोक्तस्तु विप्रतिषेधो सिद्धः । ज्ञानादीनां गुणत्वेपि 'एवं धर्मान् पृथक् पश्य'न्नित्यादिश्रुतिभिः स्वरूपत्वात् । अन्यथा 'आनंदो ब्रह्म आनंदं ब्रह्मण ' इतिश्रुत्योरपि विप्रतिषेधः स्यात् । शांडिल्यवर्तनेपि ।

'यदि विद्याच्चतुर्वेदान्सांगोपनिषदान्द्विजः ।
न चेत् पुराणं संविद्यान्नैव स स्याद्विचक्षण ॥ '

इत्यादाविव पंचरात्रेण वेदोपबृंहणस्य विवक्षितत्वेन वा 'प्रातः प्रातरनृतं ते वदंति पुरोदयात् जुह्वति येऽग्निहोत्र'मित्यादिवन्न हि निंदान्यायेन पंचरात्रप्राशस्त्यमात्रपरत्वेन वा वेदनिंदाया अभावात्। तथा पंचरात्रस्य वेदाविरोधेन विरोधाधिकरणन्यायाविषयत्वात् स्मृत्यधिकरणन्यायेन वेदमूलत्वेन प्रामाण्यमेव।

तस्मात् शाक्तपक्षे पक्षपाताद्विद्वेषाद्वैष्णवे मते।
महासुरैः पंचरात्रनिरास इह कल्पितः॥

केचित्तु आद्यसूत्रद्वयेनोक्तरीत्या जीवोत्पत्त्यादिना पंचरात्राप्रामाण्यं पूर्वपक्षयित्वा तृतीयेन संकर्षणादीनां विज्ञानं चादि चेति विग्रहेण विज्ञानादिभावे ब्रह्मभावे सति तत्प्रतिपादकशास्त्रस्य प्रामाण्यं न प्रतिषिध्यते। संकर्षणादौ जीवादिशब्दास्तु जीवाद्यधिष्ठानकत्वात्। ततश्च जीवोत्पत्त्यादिकमसिद्धमित्युक्त्वा चतुर्थेन च पंचरात्रे जीवोत्पत्तिः 'स ह्यनादिरनंतश्चे'त्यादिना प्रतिषिद्धा चेत्युक्त्वा प्रामाण्यं सिद्धांतितम्। तृतीयसूत्रस्थेन हि वाशब्देन 'अपि वा कर्तृसामान्या'दित्यादिवत्पक्षो विपरिवर्तत इत्याहुः। तन्न। परमतनिरासकेस्मिन्पादे स्वमतसमर्थनस्यासंगतेः। जीवशब्दस्यानभिप्रेतार्थांतरं कल्पयित्वा छलेन सूत्रे पूर्वपक्षोक्त्ययोगाच्च। विज्ञानादिशब्देन ब्रह्मोक्तेः क्लिष्टत्वाच्च। किंचैवम् 'तदप्रतिषेध' इत्यत्र लाघवाय स्पष्टत्वाय च तत्प्रामाण्यमिति वक्तव्यमिति।

टीकार्थस्तु। केषांचिच्छाक्तेयानामिति॥ आद्यसूत्रनिरस्तमहावामातिरिक्तमध्यमवामानामित्यर्थः। केचिदिति। अणुवामा इत्यर्थः। अत्र पादे आद्यद्वितीयचतुर्थपंचमषष्ठानि हैतुकनिरासकत्वेनैका महापेटिका। तत्रापि षष्ठं विना चतुष्टयं सांख्यनिरासकत्वेनैकावांतरापेटिका। तृतीयेन मध्ये समुत्थितस्य चार्वाकस्य निरासः। सप्तममारभ्य द्वादशपर्यंतं पाषंडनिरासकत्वेनैका महापेटिका। तत्रापि सप्तमाष्टमनवमदशमान्यवैदिकपाषंडनिरासकत्वेनैकावांतरपेटिका। तत्रापि

सप्तमाष्टमनवमानि बौद्धनिरासकत्वेनैकावांतरपेटिका । एकादशद्वादशे तु वैदिकपाषंडनिरासकत्वेनैका पेटिकेति द्रष्टव्यम् ।

॥ इति शाक्ताधिकरणम् ॥ १२ ॥

इति श्रीमद्ब्रह्मण्यतीर्थपूज्यपादानां शिष्येण व्यासयतिना
विरचितायां श्रीमद्भाष्यटीकाविवृतौ

तात्पर्यचंद्रिकायां द्वितीयाध्यायस्य द्वितीयः पादः ॥ २ ॥ २ ॥

॥ श्रीकृष्णार्पणमस्तु ॥



॥ श्रीः ॥

श्रीमद्ब्रह्मण्यतीर्थपूज्यपादशिष्यश्रीमद्व्यासमुनिविरचिता

# तात्पर्यचन्द्रिका

## द्वितीयाध्यायस्य तृतीयः पादः

॥ श्री गुरुभ्यो नमः हरिः ॐ ॥

श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥

### अथ वियदधिकरणम्

समयाविरोध उक्तः । श्रुत्यविरोध उच्यतेऽस्मिन् पादे

॥ ॐ न वियदश्रुतेः ॐ ॥

अत्र समन्वयाध्यायोक्तं विष्णोः सर्वस्रष्टृत्वं वियदनुत्पत्तिश्रुतिविरुद्धं न वेति चिंता । तदर्थं वियदनादित्वश्रुतिर्मुख्योत गौणीति । तदर्थमनादित्वश्रुतिरनुभवाद्यनुगृहीतत्वेन प्रबलोत नेति ॥ अधिभूतादिविचार इति ॥ एकैकाधिभूतविचार इत्यर्थः ॥ विचारबाहुल्याभिप्रायेण क्रमोल्लंघनमिति ॥ सूचीकटाहन्यायेन वर्तिष्यमाणक्रमानुसारेणाधिभूताधिदैवपरमात्मजीवेति वक्तव्ये 'जीवपरमात्माधिभूताधिदैवेष्वि'ति जीवादिशब्दानां पूर्वनिपातोत्र जीवादिविचारस्य बह्वर्थविषयकत्वेन जिज्ञासुं प्रत्यभ्यर्हितत्वादल्पाच्तरत्वाच्चेत्यर्थः । 'अनुभूतियुक्तिबहुवाग्विरोध' इति न्यायविवरणोक्तपूर्वपक्षयुक्तिं विवृणोति ॥ नह्यवकाशस्योत्पत्तिरित्यादिना । अत्र न्यायविवरणे 'अवकाशमात्रस्याव्याकृतात्मकत्वादनुत्पत्तिश्रुतीनां तद्विषयत्वम् । उत्पत्तिवचनानामसितवर्णभूततदभिमानशरीरविषयत्वं पराधीनविशेषवत्त्वमात्रविषयत्वंवेति व्यवस्थे'ति सिद्धांतयुक्तिरुक्ता । तां विवृणोति ॥ तथाहीत्यादिना ॥ नन्वत्राकाशद्वित्वमज्ञात्वा 'आत्मन आकाशः संभूत' इत्य-

भूत्वाभवनरूपोत्पत्तिश्रुतेः 'अनादिर्वा अयमाकाश'इत्यनुभवाद्यनुगृहीतश्रुतिविरोधेनाप्रामाण्ये पूर्वपक्षिते द्वावाकाशौ । तत्रोत्पत्तिश्रुतिर्भूतविषया । अनुत्पत्तिश्रुतिस्तु अवकाशविषया । तस्मान्न विरोध इति श्रुतिद्वयस्यापि मुख्यार्थत्वेन व्यवस्थेति न्यायविवरणोक्तं पक्षांतरं टीकायां कस्मान्नोक्तमिति चेत् उच्यते । तथात्वे गुणपूर्तिसिद्धये जन्मादिसूत्राभिप्रेतस्वेतरसर्वकारणत्वासिद्धिः । अत्राप्याद्यसूत्रस्थवियत्पदस्य संकोचः । द्वितीयसूत्रेऽनादित्वश्रुतेर्गौणत्वोक्तिविरोधः । ईशाधीनविशेषेण जन्या इत्येव कीर्तिताः' इत्यनुव्याख्यानविरोधः । षष्ठसूत्रीयभाष्योदाहृतश्रुतिस्थस्य 'स इदं सर्वमसृजते'ति सर्वशब्दस्य संकोचः । 'आत्मा वा इदमेक एवाग्र आसी'दित्यवधारणादिविरोधः । इत्यनेकदोषप्रसंगान्नोक्तम् । अत एव न्यायविवरणेऽपि पूर्वत्रारुच्या 'पराधीनविशेषवत्त्वमात्रविषयत्वं वे'ति पक्षांतरमुक्तम् । न्यायविवरणेऽनुत्पत्तिवचनानामव्याकृताकाशविषयत्वोक्तिस्तु तस्य भूताकाशस्येवाभूत्वाभवनरूपोत्पत्तिर्नास्तीत्यभिप्राया । अत्र यद्यप्यव्याकृताकाशस्य तदभिमानिचित्प्रकृतेश्च 'स इदं सर्वमसृजते'त्यादिश्रुत्युक्तोत्पत्तिः पराधीनविशेषावाप्तिरूपा । भूताकाशस्य तु 'आकाशः संभूत'इति श्रुत्युक्ताऽभूत्वाभवनरूपा । एवञ्च अव्याकृताकाशादेर्ब्रह्मवच्चतुर्विधनाशराहित्यरूपस्य 'स्वयं नित्यः परात्पर'इत्युत्तराधिकरणभाष्योदाहृतस्मृत्यादिसिद्धस्य परात्परनित्यत्वरूपस्य मुख्यनित्यत्वस्यासंभवादनादित्वश्रुतिः स्वरूपानादित्वमात्रेण गौणी । भूताकाशादेस्तु स्वरूपानादित्वस्याप्यसंभवात्सूक्ष्मरूपनित्यत्वादिमात्रेण गौणी । भूतेंद्रियप्राणगुणसूक्ष्मरूपं तु नित्यक'मित्यादिवचनादित्येवं गौणीति सूत्रार्थः । अत एव 'शब्दाच्चे'तिसूत्रे भाष्योदाहृता 'भागशो ह्युत्पद्यंत'इति श्रुतिरपि भूताकाशस्य सूक्ष्मरूपेण नित्यत्वमुपचितरूपेण तु सादित्वमित्यभिप्राया सती प्रकृतोपयोगिनीत्येवमुत्पत्त्यनुत्पत्तिश्रुत्योर्व्यवस्था वक्तुं शक्या । तथापि सोत्तरसूत्रेऽतिस्पष्टेत्युपेक्ष्य सर्वविषयत्वासर्वविषयत्वाभ्यां तामाह ॥ सर्वविषयत्वादुत्पत्तिश्रुतिर्मुख्यार्थेत्यादिना ॥

पराधीनविशेषावाप्तिरूपोत्पत्तिर्हि भूतावकाशतद्देवतारूपचतुष्टयेऽप्यस्ति। अनुत्पत्तिस्तूक्तोत्पत्त्यभावरूपा चेन्न काप्यब्रह्मणि। स्वरूपानादित्वरूपा त्ववकाशादावस्ति। न तु भूते। तथा च भूतेऽनुत्पत्तिश्रुतिश्च्छत्रिवल्लाक्षणिकी वा चिरंतनत्वमात्रेण गौणी वा स्यात्। उक्तचतुष्टयार्थक आकाशशब्दो वा भूतेतरस्मिन्नमुख्यः स्यादिति भावः॥ तत्प्रकारश्चाकाशस्योक्त इति॥ चतुष्टयात्मक आकाशश्चतुर्भिरपि भागैरुत्पद्यते। उक्ताया उत्पत्तेश्चतुर्ष्वपि सत्त्वादिति सर्वविषयत्वादुत्पत्तिश्रुतिर्मुख्येत्यत्रोक्तमित्यर्थः॥ प्राणस्योपरिवक्ष्यत इति॥ भूततन्मुख्यामुख्याभिमानिरूपत्रितयात्को वायुस्त्रिभिरपि भागैरुत्पद्यत इत्युत्तराधिकरणे वक्ष्यत इत्यर्थः। अनुत्पत्तिमच्छब्दस्य मुख्यार्थत्वदर्शनादिति॥ यद्यप्येक एव शब्दः प्रयोगभेदेन प्रवृत्तिनिमित्तवति मुख्योऽन्यत्रामुख्यश्च दृष्टः। तथापीह शब्दैकगम्ये शब्दादेव प्रवृत्तिनिमित्तस्यापि कल्प्यत्वादनेकार्थत्वस्यान्याय्यत्वाच्च ब्रह्मणि नित्यशब्दप्रवृत्तौ यन्निमित्तं तदेवान्यत्रापि वक्तव्यमिति वा 'आकाशवत्सर्वगतश्चनित्य' इत्यादौ सकृत्प्रयुक्तस्य नित्यशब्दस्य ब्रह्मतदन्ययोर्मुख्यत्वामुख्यत्वेन युक्ते इति वा शंकाभिप्रायः। परिहाराभिप्रायस्तु प्रवृत्तिनिमित्तस्य शब्दैकगम्यत्वेऽपि विरिंचिपरब्रह्मणोर्ब्रह्मशब्दवदाकाशब्रह्मणोरनुत्पत्तिमच्छब्दस्य बाधाबाधाभ्यां व्यवस्था। अस्ति चात्राब्रह्मणि मुख्यत्वे प्रतिज्ञाहान्यादिकं बाधकम्। दृश्यते च द्वे ब्रह्मणी इत्यादौ सकृत्प्रयुक्तस्यापि ब्रह्मशब्दस्य जीवेष्वमुख्यतेति। इह च प्रकरणे सूत्रे पराधीनविशेषावाप्तिरेकोत्पत्तिर्विवक्षिता। नत्वभूत्वाभावनम्। तथात्वे मम मते 'ज्ञोऽत एवे'त्युत्तरत्र जीवोत्पत्त्युक्तेः तथेह 'प्रतिज्ञे'ति सूत्रे 'इदं सर्वमसृजते'ति प्रतिज्ञाहान्युक्तेः परमत एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाहान्युक्तेः तथा 'याव-' दिति सूत्रे मम मतेऽल्पशक्तित्वस्य परमते भिन्नत्वस्य हेतुत्वोक्तेश्चायोगात्। नहि परमतेऽपि ब्रह्मणोऽन्यदविद्यादिकमभूत्वा भवति। उक्तं च श्रीभाष्येऽपि 'कार्यत्वं हि नाम द्रव्यस्यावस्थांतरापत्तिः। तच्च जीवस्य ज्ञानसंकोचविकासलक्षणम्। वियदादेस्तु स्वरूपान्यभाव

लक्षण'मिति । अस्ति च विशेषणस्योत्पत्तौ विशिष्टस्योत्पत्तिः । पाकेन घटो रक्तो जात इत्यनुभवात् । विशिष्टं च विशेष्यभिन्नम् । यत्र च स्वरूपनित्यत्वं प्रमितं तत्रैवोत्पत्तिश्रुतिः पराधीनविशेषावाप्तिपरा । अन्यत्र त्वभूत्वाभवनपरापीति नातिप्रसंगः । नचाकाशद्वित्वे मानाभावः । भूताकाशातिरिक्ताया देशकालापरिच्छिन्नायास्तर्किकाद्यभिमतदिश एवास्मन्मतेऽव्यकृताकाशत्वात् । प्राच्यादयो दिग्विशेषास्तु तद्भागाः । उक्तं हि टीकाकारैः 'अवकाशमात्रं हि दिगित्युच्यते । अवकाशभागा एव दिग्विशेषा' इति । किञ्च प्रदेशरूप आकाशो नीरूपः साक्षिसिद्धश्च । अन्यथाऽवकाशे संदेहेनांधकारादौ हस्तचालनादिकं न स्यात् । नच मूर्तविशेषाभाव इव तदाश्रये देशे कश्चित्संदिग्धे । भूताकाशं तु 'भूतमप्यसितं दिव्यदृष्टिगोचरमेव च'त्यादिरूपश्रुत्या रूपि । अप्रत्यक्षं च । किञ्च भूताकाशं 'सर्वेपंचभिराविष्टं भूतैरीश्वरबुद्धिजैः । पंचभूतात्मके देह' इत्यादिस्मृतिभिर्देहाकारेण विकारि । अवकाशस्तु कूटस्थनित्यत्वेन साक्षिसिद्धः । नच सर्वाधारभूतौ देशकालौ किंचिद्द्रव्यात्मना विकुरुतः । कथं वाऽवकाशस्य पंचीकरणम् । किञ्चावकाशः 'अनादिर्वा अयमाकाशः' इत्यादिश्रुतिभिरवकाशोपादानप्रागभावयोर्बुद्ध्यनारोहादि युक्तिभिश्चानादिः । नतु तामसाहंकारकार्यम् । नहि पूर्वमाकाशो नासीत् । किन्तु सर्वत्र वा कुत्रचिद्वा घनीभावएवासीदिति धीर्युक्ता । सर्वत्रेत्यादिनैवाकाशनिर्देशात् । भूतं तु 'आत्मन आकाशस्संभूत' इत्यादिप्रकरणानुगृहीतश्रुतिभिः 'तामसाच्च विकुर्वाणाद्भगवद्वीर्यचोदितात् । शब्दमात्रमभूत्तस्मान्नभः श्रोत्रं तु शब्दज'मित्यादिस्मृतिभिश्च तामसाहंकारकार्यम् । किञ्च 'एतदंडं विशेषाख्यं क्रमाद्वृद्धैर्दशोत्तरैः । तोयादिभिः परिवृत'मित्यादिस्मृतिभिरेकमविभु । अन्यत्तु विभु । 'आकाशवत्सर्वगतश्च नित्यः । स यथाऽनंतोऽयमाकाश'इत्यादिश्रुतेः । तथा अत्र देशो नास्तीत्येतदिदानीं कालो नास्तीतिवद्व्याहतम् । अत्रेत्यनेनैव देशनिर्देशात् । एवं ब्रह्म वाऽन्यद्वा देशं विना कुत्रचिदस्तीत्येतदपि व्याहतम् । अत एव 'स एवाधस्तात्स उपरिष्टात्स पश्चात्स

पुरस्तात् स दक्षिणतः स उत्तरतः 'इत्यादिश्रुतिः । 'व्याप्तं त्वयैकेन दिशश्च सर्वा 'इत्यादिस्मृतिश्च ब्रह्मणो विभुदेशसंबंधेनैव विभुत्वमाहेत्यादियुक्तेश्च । किञ्च

'मृतिकाले जहत्येनं प्राणा भूतानि पंच च ।
भागशो भागतस्त्वेनमनुगच्छंति सर्वशः ॥'

इत्यादिस्मृतिभिर्भूताकाशं गत्यादियोग्यभागवत् । अवकाशस्तु न गत्यादियोग्यभागवान् । नहि प्रदेशविशेष एतद्देशं त्यक्त्वा प्रदेशांतरं गच्छति । किञ्च 'आकाशो नीलिमोदेति न प्रदेशः कथंचने'ति श्रुत्यैवाकाशद्वित्वं कंठोक्तम् । तस्मादाकाशद्वित्वं प्रामाणिकमेवेति ॥

अन्येतु ॥ अस्तिहि 'आत्मन आकाशः संभूत ' इति तैत्तिरीय आकाशस्य प्रथमं जन्म । 'तत्तेजोऽसृजते'ति छांदोग्ये तु तेजसः । तथाच तयोरन्योन्यं विरोध इति द्वितीयसूत्रेण पूर्वपक्षयित्वा वियत उत्पत्तिर्न श्रूयते । संभूतश्रुतिस्त्वधुनावकाशो जात इतिवद्गौणी । विभोराकाशस्योत्पत्त्यसंभवात् । 'आकाशवत् सर्वगतश्च नित्य 'इत्यादिशब्दाच्च । स्याच्चैकस्यैवसंभूतशब्दस्याकाशे गौणत्वम् । वाय्वादौ तु मुख्यत्वम् । यथानंदमयप्रकरणे ब्रह्मशब्दस्यान्नादौ गौणत्वमानंदे तु मुख्यत्वम् । तस्मान्न श्रुत्योर्विरोध इत्याद्यतृतीयचतुर्थपंचमैः सिद्धांत्येकदेशिमतमुक्त्वा आकाशस्य ब्रह्मकार्यत्वाभावे तद्यतिरेकापत्त्यैकविज्ञानेन सर्वविज्ञानप्रतिज्ञाहानिः । प्रतिज्ञा हि 'यथा सौम्यैकेन मृत्पिंडेने'त्यादिशब्दैरव्यतिरेकाभिप्राया । किञ्चाकाशः विकारः कार्यं विभक्तत्वात् भिन्नत्वाद्धटवदिति षष्ठसप्तमाभ्यां सिद्धांतितमित्याहुः । तत्र विरोधेन पूर्वपक्ष इति तावदयुक्तम् । छांदोग्ये ह्याकाशस्योत्पत्त्यनुक्तिमात्रम् । नत्वनादित्वोक्तिः । नचानुक्तिस्तैत्तिरीयस्योत्पत्त्युक्त्या विरुद्धा । ननु तैत्तिरीय आकाशस्य पूर्वं जन्मोक्तं छांदोग्ये तु तेजस इति विरोध इति चेन्न । त्वन्मते जगतो मिथ्यात्वेनात्यताभावप्रतियोगिनो जन्मासंभवात् । आरोपितस्य जन्मादेः श्रुत्यबोध्यत्वात् । छांदोग्ये क्रमानुक्तावपि तैत्तिरीयोक्तस्य 'स इदं सर्वमसृजते 'त्यादाविव ग्राह्यत्वेना-

विरोधित्वाच्च । श्रुत्यंतरोक्तोपसंहारश्च सर्ववेदांताधिकरणसिद्धः । यद्यपि 'तत्तेजोऽसृजत वायोरग्नि'रिति श्रुत्योर्विरोधधीः । तथापि 'तेजोऽतस्तथा ह्याहे'त्यत्रैव स निरसिष्यते । किञ्चायं विरोधस्त्वन्मत आद्यस्य चतुर्थपादे 'कारणत्वेने'त्यत्र शंकित इति तत्रैव निरस्यः । नत्वत्र । प्रपंचितं चैतदस्माभिस्तत्रैव । किञ्च मम रीत्या 'अनादिर्वा अयमाकाशः आकाशवत्सर्वगतश्चनित्यः स यथानंतोऽयमाकाशः अकाशः संभूत' इत्यनादित्वसादित्वश्रुत्योः स्पष्टविरोधेन पूर्वपक्षसंभवे नास्पष्टश्रुतिविरोधेन स युक्तः । किञ्चाद्येन सिद्धांत्येकदेशिमतं प्रक्रम्य द्वितीयेन विरोधपूर्वपक्षमुक्त्वा पुनस्तृतीयादिभिरेकदेशिमतस्य विक्षिप्योक्तौ न हेतुरस्ति । किञ्च चेदित्यादिपूर्वपक्षचिह्नस्य नेत्यादिसिद्धांतचिह्नस्य एक इत्याद्येकदेशिमतचिह्नस्याभावेऽपि तथा मम रीत्याऽऽद्ये पूर्वाधिकरणादनुवृत्तमुत्पत्त्यसंभवं न वियदनुत्पत्तिमदिति वियति नञा निषिध्य 'अश्रुते'रित्यनेन तत्रानुत्पत्तिश्रुत्यभावहेतुमुक्त्वा तृतीय आद्योक्तहेतुसिद्ध्यर्थमनुत्पत्तिश्रुतेर्गौणत्वोक्तिरित्येवं सर्वेषां सिद्धांतसूत्रत्वसंभवेन सूत्राणि छित्त्वा पूर्वपक्षत्वादिवर्णनं युक्तम् । सिद्धांतेऽपि षष्ठोक्तो हेतुरयुक्तः । त्वदुक्तस्यैकविज्ञानेन सर्वविज्ञानस्य प्रकृत्यधिकरणादौ निरस्तत्वात् । भावरूपाज्ञानादीनामिवाकाशस्याप्यनादित्वेऽप्येकविज्ञानेन सर्वविज्ञानोपपत्तेश्च । कार्यत्वमारोपितत्वं चेच्छ्रुतिसूत्रविरोधः । नहि 'आत्मन आकाशः संभूत'इत्यादिविषयवाक्येषु तदनुसारिसूत्रेषु चाकाशादेरारोप उच्यते । तथात्व आकाशादेरप्युत्पत्तौ मानाभावेनाविद्यादिवदनाद्यारोपितत्वमेव स्यात् । नात्माश्रुतेरित्यत्र जीवस्योत्पत्तिनिषेधोऽप्ययुक्तः स्यात् । विशिष्टरूपस्य जीवस्याप्यारोपितत्वात् । असंभवस्तु सतोऽनुपपत्तेरित्यत्र च ब्रह्मण आरोपमात्रस्य निषेधः स्यात् । नतूत्पत्तेः । अपिच मम रीत्या 'स इदं सर्वमसृजते'ति प्रतिज्ञया साक्षात्सर्वजन्मसिद्धावेकविज्ञानेन सर्वविज्ञानप्रतिज्ञयार्थात् तदुक्तिरयुक्ता । सप्तमे विभागशब्दोक्तो भिन्नत्वरूपो हेतुरप्ययुक्तः । आरोपितस्य धर्मिसत्तासमानसत्ताकस्य तस्याधिष्ठानेऽ-

नृतव्यावृत्तेश्च ब्रह्मण्यपि सत्त्वात् । दृष्टो हि शुक्तौ स्वारोपितादूप्या-द्धर्मिसत्तासमानसत्ताको भेदः । सत्यस्य च तस्याकाशेऽपि अभावात् ।

केचित्तु ॥ आकाशस्याजन्यत्वमित्याद्येन पूर्वपक्षे जन्यत्वमिति द्वितीयेन सिद्धांतः । पुनस्त्रिभिरुत्पत्तिश्रुतिर्गौणीति पूर्वपक्षे एकविज्ञानेन सर्वविज्ञानादियुक्तिभिर्न गौणीति द्वाभ्यां सिद्धांत इत्याहुः । तन्न । जीवप्रकृत्यादीनामिवाकाशस्यानादित्वेप्येकविज्ञानेन सर्वविज्ञानोपपत्ते-रित्याद्युक्तदोषसाम्यात् । मन्मते तु अयमिह शक्तोत्र तु नेति विभाग-रूपः सौत्रो हेतुः 'विभागोह्यल्पशक्तिः स्यादिति स्मृत्याल्पशक्तित्व-रूपः । स च पराधीनविशेषावाप्तिरूपविकारव्याप्य एवेति न कश्चिद्दोषः ।

॥ इति वियदधिकरणम् ॥ १ ॥

---

## अथ मातरिश्वाधिकरणम्

## ॥ ॐ एतेन मातरिश्वा व्याख्यातः ॐ ॥

अत्राधिकरणक्रम 'आकाशाद्वायु'रिति श्रुतिक्रमात्पूर्वोक्तन्यायाति-देशाद्वा । अत्रोक्तं ब्रह्मणः सर्वस्रष्टृत्वं किं मुख्यवाय्वनुत्पत्तिश्रुतिविरुद्धं नवेति चिन्ता । तदर्थं तदनादित्वश्रुतिर्मुख्योत गौणीति । तदर्थं तस्या गौणत्वे तेजोबन्नानामनित्यत्वमुक्त्वा वायेर्नित्यत्वोक्तिर्न घटत उत घटत इति । तदर्थमनित्येभ्यस्तेजोबन्नेभ्यो वायोर्विशेषः किं स्वातन्त्र्यरूपेण परात्परनित्यत्वेन किं वा स्वरूपातिरिक्तज्ञाननित्यत्व(रूपे)मात्रेणेति । अतिदेशत्वसिद्धये भाष्योक्तमभ्यधिकाशंकाचतुष्टयं विवृणोति ॥ तथा सतीत्यादिना ॥ ननु भाष्योदाहृतश्रुतावाकाशादिपदैर्भूतान्येवोच्यन्ते । तेभ्यश्च मुख्यवायोः स्वरूपनित्यत्वमेव विशेष इति नेत्याह ॥ न चात्रा-काशपदेनेति ॥ 'अधिकमनुभूत्यादिविरुद्धत्व'मिति न्यायविवरणोक्तं पूर्वपक्षहेतुमुपपादयितुं श्रुतियुक्तिविरोधमुक्त्वानुभवविरोधमप्याह ॥ एवं विधस्य चेति ॥ नित्यत्वव्याप्तोक्तबहुहेतुमत उत्पत्तिरनुभवबाधितेत्यर्थः ॥

अत्यंतमिति ॥ आकाशादेरनित्यत्वमुक्त्वा वायोर्नित्वाद्युक्तिराकाशादधिकेत्यर्थः । सौत्रेण 'एतेने'त्यनेन पूर्वाधिकरणोक्तः सर्वोऽपि हेतुर्विवक्षित इत्याह ॥ अनुत्पन्नत्वेनाश्रुतत्वादित्यादिना ॥ 'मुख्यामुख्ये'ति भाष्यं व्याचष्टे ॥ अथैतानीति ॥ तदेवान्यथापि व्याचष्टे ॥ अनुत्पत्तिश्रुतिरिति ॥ 'उभयोरपि पराधीनत्वप्राप्तेश्चान्योन्यानुरोधे । अननुरोधेतु नसर्वैश्वर्य-'मिति न्यायविवरणोक्तां युक्तिं संगृह्णाति ॥ अन्योन्येति ॥ यद्यपि

'पुरुषः प्रकृतिः कालो देवास्तदभिमानिनः ।
महदाद्याश्च जायन्ते पराधीनविशेषिताः ॥
इदं सर्वंससर्जेति जनिमत्त्वमिहोदितम् ।'

इति पूर्वाधिकरणीयानुव्याख्याने चित्प्रकृतेरपि पराधीनविशेषावाप्तिरूपोत्पत्तेरुक्तत्वान्मुख्यवायोरपि सा कैमुत्यन्यायसिद्धा । तथापि मुख्यवायोः न पार्थिवादिवत् परानित्यत्वम् । नापि भूताकाशाभिमानिविनायकादिवत्स्वरूपानादित्वेऽपि स्वरूपातिरिक्तज्ञानसादित्वरूपमनित्यत्वम् । प्रलयेऽपि प्रतिभातपरावरत्वात् । नापि ईश्वरवत्स्वातन्त्र्यरूपं परात्परनित्यत्वम् । परतन्त्रत्वात् । नापि चित्प्रकृतिवद्देहादिनित्यत्वरूपं परनित्यत्वम् । देहोत्पत्तेः सत्त्वात् । किन्तु स्वरूपातिरिक्तज्ञानस्यापि नित्यत्वमिति विशेषं वक्तुमिदमधिकरणं इति द्रष्टव्यम् ।

अन्येतु ॥ छांदोग्ये वायोर्भूतस्योत्पत्त्यश्रवणात्तैत्तिरीये तु तच्छ्रवाणाच्छ्रुत्योर्विरोध इति पूर्वपक्ष इत्याहुः । तन्न । उक्त्यनुक्त्योरविरोधादित्युक्तत्वात् । भूतपरत्वेस्याधिकरणस्य 'आकाशाद्वायु'रित्याकाशजे वायावाकाशसाम्यस्याप्यभावेन सुतरामधिकाशंकाभावेनातिदेशायोगाच्च । यद्यपि 'वायुश्चांतरिक्षं चैतदमृत'मिति द्वयोरप्यमृतत्वमुक्त्वा 'सैषानस्तमिता देवता यद्वायु'रिति वायोर्विशिष्यानस्तमितत्वोक्तिरधिका । तथापि सा देवताविषया । त्वन्मते त्विदं भूतविषयम् । नचास्याधिकरणस्य देवताविषयत्वे प्रकरणविरोधः । उक्तरीत्या वियदधिकरणे 'तत्तेजोऽसृजत तत्तेज ऐक्षत तदपोऽसृजत ता आप ऐक्षन्ते'तिवाक्यद्वयविषय उत्तराधिकरणद्वये च देवताया अपि प्रकृतत्वात् । परंत्विदं देवतामात्रविषयम् ।

पूर्वमुत्तरद्वयं चोभयविषयमिति भेदः ।

केचित्तु अधिकाशंकाभावान्नेदमधिकरणांतरम् । किन्तु पूर्वाधिकरणशेषभूतं सद्भूतविषयमेवेत्याहुः । तन्न । अस्मद्रीत्याऽधिकाशंकाचतुष्टयसद्भावात् । 'सैषानस्तमिते'ति श्रुतौ देवतापदस्य 'कुविदंगे-' त्यृचि देवोपास्यत्वस्य श्रवणाच्च । अधिकाशंकाभावे पूर्वन्यायेनैव सिद्ध्यैकाधिकरणत्वेप्यस्य सूत्रस्य वैयर्थ्याच्च ।

॥ इति मातरिश्वाधिकरणम् ॥ २ ॥

---

## अथ असंभवाधिकरणम्

## ॥ ॐ असंभवस्तु सतोऽनुपपत्तेः ॐ ॥

एवमधिकरणद्वयेनाब्रह्मणो संभवदुत्पत्तिकस्यापि नभःप्रभृतेः सर्वस्योत्पत्तौ श्रुत्योक्तायां तर्हि तद्वदेव ब्रह्मणोप्युत्पत्तिरस्त्विवति पूर्वपक्षोदयात्संगतिः । अत्रोक्तं ब्रह्मणः सर्वस्रष्टृत्वादिकं ब्रह्मण उत्पत्तिमत्त्वश्रुतिविरुद्धं नवेति चिन्ता । तदर्थं 'असतः सदजायते'ति श्रुतिः किमसतः सकाशात् ब्रह्मण उत्पत्तिपरा किं वा ब्रह्मणः सकाशाद्वायोरुत्पत्तिपरेति । तदर्थं ब्रह्मानुत्पत्तिश्रुतिरपि किं वाय्वाद्यनुत्पत्तिश्रुतिवत्पराधीनविशेषावातिलक्षणोत्पत्तिसद्भावेऽपि स्वरूपोत्पत्तिमात्रस्य निषेधिका किं वा पराधीनविशेषावाप्तिरूपोत्पत्तेरपीति । 'असदितिचे'दित्यत्र ब्रह्मकारणत्वश्रुतेः 'असतः सदजायते'त्यादिप्रागभावकारणत्वश्रुतिसंवादियुक्तिविरोधो निरस्तः । 'नासतोदृष्टत्वा'दित्यत्र समयप्राप्तं शून्यस्य हेतुत्वं निरस्तम् । अत्र तु तस्या एव 'असतः सदजायते'त्यादिका ब्रह्मणोसत्कार्यत्वश्रुत्यैव विरोधो निरस्यत इति भेदः ॥ अनादितया समस्येति ॥ देहानादित्वादिना चित्प्रकृतिसमस्येत्यर्थः । अनेन 'चित्प्रकृतेश्च सममेत'दिति न्यायविवरणोक्तापूर्वपक्षयुक्तिर्विवृता ॥ स्वातन्त्र्याख्यो हेतुरिति ॥ 'सत्त्वं स्वातन्त्र्यमुद्दिष्ट'मिति भारतोक्तेरिति भावः । अनेन न्यायविवरणोक्तः

स्वातन्त्र्यरूपो हेतुः सूत्रारूढो दर्शितः । महत्वादिसद्गुणत्वादिति ॥

'सद्भावे साधुभावे च सदित्येतत्प्रयुज्यते'

इति गीतोक्तेरिति भावः ॥ एकैवेत्यर्थ इति ॥ यद्यविभिन्नेत्यस्य भेदरहितेत्यर्थः स्यात्तर्हि तत्प्रतियोगिसमर्पकस्य 'भेदैरपि विभा(व्य)व्यते' इत्यस्य भेदोर्थः स्यात् । नच तद्युक्तम् । निर्भेदत्वात् । भेदैरिति बहुवचनायोगाच्च । एकेत्यर्थत्वे तु भेदैरित्यस्यापि द्वित्वत्रित्वादिसंख्याभिरित्यर्थो भवति । तथाच निर्भेदेपि द्वित्वादिसंख्यानां सत्त्वान्न दोष इति भावः ।

अन्येतु ब्रह्म कार्यं कारणत्वात् पटादिवदिति प्राप्ते सन्मात्रं हि ब्रह्म । तस्य न तावत्सन्मात्रादुत्पत्तिः । अतिशयाभावे कार्यकारणभावायोगात् । नापि सद्विशेषात् । विशेषात् सामान्यस्यानुत्पत्तेः । नाप्यसतः । तस्य निरात्मकत्वादिति सिद्धान्त इत्याहुः । तन्न । मम रीत्या 'असतः सद्जायते'त्यादिश्रुत्या ब्रह्मणः कार्यत्वशंकायाः पादसंगतायाः संभवेऽप्रयोजकेन कारणत्वेन तदसंगततच्छंकायोगात् । यच्चोक्तं सत्सामान्यं ब्रह्मेति । तन्न । परमार्थसतो ब्रह्मणो व्यावहारिकसदाद्यनुगत्ययोगात् । परमार्थसति च सामान्यविशेषभावाभावात् । सद्व्यक्तीनां च सत्त्वाविशेषेपि शक्तशक्यत्वादिविशेषेणैव द्रव्यादिव्यक्तीनामिव कार्यकारणतोपपत्तेः ।

यत्तूक्तं भामत्यां अधिष्ठानार्थमपेक्षितेन सत्त्वेन ब्रह्मण आरोपितत्वमिह निषिध्यते । आरोपितता हि कार्यतेति । तत्र प्रक्रमानानुगुण्यम् । नहि पूर्वाधिकरणयोः 'आत्मन आकाशः संभूत' इत्यादिश्रुत्याऽऽकाशवाय्वादेरात्माकाशादावारोपितत्वमुक्तम् । येनेह ब्रह्मणि तदाशंक्य निषिध्येत । सौत्रासंभवपदास्वारस्यं च । 'नात्माश्रुते'रित्यनेन पौनरुक्त्यं च । नच अत्र ब्रह्मणोऽनुत्पत्त्युक्तिः । नात्मेत्यत्र तु तस्माद्भिन्नस्य जीवस्येति वाच्यम् । विशिष्टरूपस्य जीवस्य ब्रह्मणश्चारोपितत्वात् । आरोपितस्य च निवृत्तिनियमात् । चिन्मात्रानारोपस्य चैकेनैव सिद्धेः । केचित्तु असंभवोनुत्पत्तिः सत एव ब्रह्मण एव । अन्यत्तु महदादिकमुत्पद्यत इत्येवं महदादेरुत्पत्त्यर्थमिदं सूत्रमित्याहुः । तन्न । अवक्तव्योक्तेरवश्य-

वक्तव्यानुक्तेश्च । वियदधिकरणोक्तैरेकविज्ञानेन सर्वविज्ञानादिन्यायैः सिद्धा हि महदादेरुत्पत्तिः पृथगवक्तव्या । अवश्यवक्तव्या च सतोऽनुत्पत्तिः 'सदजायते'त्यादिश्रुत्यविरोधाय ॥

॥ इति असंभवाधिकरणम् ॥ ३ ॥

---

## अथ तेजोधिकरणम्

## ॥ ॐ तेजोऽतस्तथाह्याह ॐ ॥

एवं ब्रह्मान्यस्य सर्वस्योत्पत्तौ ब्रह्मणश्चानुत्पत्तौसिद्धायामिदानीं कार्यविशेषे कारणविशेषविप्रतिपत्तिर्निरस्यत इति संगतिः । अत्रोक्तं ब्रह्मण एव सर्वस्रष्टृत्वं वायुदेवतातस्तेजोजन्मश्रुतिविरुद्धं न वेति चिंता । तदर्थं 'वायोरग्नि'रिति श्रुतिः किं वायोर्द्वारत्वमात्रेणायुक्तोत युक्तेति । तदर्थं ब्रह्मणो द्वारोपादानं किं द्वाररहितस्याशक्त्या किं वा शक्तस्यापि लीलयेति ॥ विवादाभाव इति ॥ यद्यपि 'आकाशाद्वायुः एतस्माज्जायते प्राणो मनः सर्वेंद्रियाणि च, खं वायुर्ज्योति'रिति श्रुत्योः विवादोऽस्ति । तथाप्यतिव्यवहितस्य तेजसो ब्रह्मजत्वसाधकैतदधिकरणन्यायेनैवाव्यवहितस्य वायोस्तत्सिद्धेः पृथग्विवादाभाव इति भावः । 'विष्णोरेव तेजस उत्पत्तौ द्वारकारणवैयर्थ्य'मिति न्यायविवरणोक्तां पूर्वपक्षयुक्तिमाह ॥ किं ब्रह्म वायुद्वारमिति ॥ 'द्वारमनुसृत्यैव विष्णोः प्रवृत्ति'रिति न्यायविवरणोक्तां सिद्धांतयुक्तिमाह ॥ वाय्वादेरकारणत्वेपीति ॥ स्वतंत्रकारणत्वाभावेऽपीत्यर्थः ॥ उभयकारणत्वनिवृत्त्यर्थत्वादिति ॥ ब्रह्मवद्वायुरपि स्वतंत्रकारणमिति शंकानिवृत्त्यर्थत्वादित्यर्थः । अत एव वक्ष्यति 'उपादानशक्तेश्च परमात्माधीनत्वा'दिति । तदनन्यत्वमित्यत्र कारणांतरस्य युक्तिप्राप्तं स्वातंत्र्यं निरस्तम् । अत्र तु श्रुतिप्राप्तमिति भेदः ॥ वायुप्रभृतीनां देवतात्वादिति ॥ देवतानां चोपादानोपादेयत्वाभावादिति भावः ।

॥ इति तेजोधिकरणम् ॥ ४ ॥

## अथ अबधिकरणम्

## ॥ ॐ आपः ॐ ॥

अधिकरणसंगतिमाह ॥ तेजसोऽनंतरप्राप्ता इति ॥ अत्रोक्तं ब्रह्मण एव सर्वस्रष्टृत्वं तेजो देवतातोऽब्जन्मश्रुतिविरुद्धं न वेति चिंता। तदर्थं किं 'अग्नेराप' इति श्रुतिः प्रबलोत 'ब्रह्मैवेदमग्र आसीत् तदपोऽसृजते'ति। तदर्थं 'अग्नेराप' इति श्रुत्यनुग्राहिका घर्मात् स्वेदादिदृष्टिरूपायुक्तिः किं तेजसो द्वारत्वमात्रेण न युक्तोत युक्तेति।

अन्येतु 'तेजः आपः' इत्यधिकरणद्वये तेजोजलयोर्ब्रह्मकार्यत्वमिति प्राप्ते वायुतेजःकार्यत्वमिति सिद्धांतः। नचैवमपसिद्धांतः। तेजोजलयोर्वायुतेजोभावापन्नब्रह्मकार्यत्वमुपेत्य शुद्धब्रह्मकार्यत्वनिषेधादित्याहुः। तन्न। तथात्वे शुद्धवाय्वादिकार्यत्वेन जन्मादिसूत्रे वियदधिकरणोक्तां प्रतिज्ञाहानिं चाक्षिप्य पूर्वपक्षस्य, तेजोवायुभावापन्नब्रह्मकार्यत्वमिति तत्समाधानेन सिद्धांतस्य च संभवे तदनाक्षेपादिना पूर्वपक्षाद्ययोगात्। किञ्चैवं हि 'तेजोऽत'इति सौत्रोतश्शब्दः स्वस्थाने आप इत्यनुवृत्तिस्थले चाव्यवहितप्रकृतसदाख्यब्रह्मरूपैकार्थपरो भवति। अन्यथा हि स्वस्थाने व्यवहितप्रकृतमातरिश्वपरोऽनुवृत्तिस्थले च तेजःपरः स्यात्।

किञ्च तेज आदेर्वाय्वादिभावापन्नविशिष्टभिन्नब्रह्मकार्यत्वे एकविज्ञानेन सर्वविज्ञानं स्यात्। विवर्तमते शुक्तितत्वज्ञानेन रूप्यस्येव वाय्वादितत्वज्ञानेन तेजआदेर्निवृत्तिश्च स्यात्।

केचित्तु 'तेज' इत्यादिसूत्रैस्तेजआदीनां केवलवाय्वादिजत्वमिति पूर्वपक्षयित्वा 'तदभिध्याना'दित्यादिभिस्सूत्रैः 'बहुस्या'मित्यभिध्यानादिना वाय्वादिशरीरकब्रह्मजत्वमिति सिद्धांतितमित्याहुः। तन्न। अतश्शब्दस्याव्यवहितप्रकृतैकब्रह्मपरत्वेन तेज इत्यादि सूत्राणां सिद्धांतत्वेनानेकाधिकरणत्वसंभवे तत्यागेन पूर्वपक्षत्वाद्ययोगात्। 'तदभि-

ध्याना'दिति सूत्रे तुशब्ददर्शनात्ततः पूर्वेषां पूर्वपक्षत्वे च 'असंभवस्त्वि'त्यत्र तद्दर्शनात्ततः पूर्वेषां 'एतेने'त्यादीनां तत्त्वं स्यात् ॥

॥ इति अबधिकरणम् ॥ ५ ॥

---

अथ पृथिव्यधिकरणम्

## ॥ ॐ पृथिव्यधिकाररूपशब्दांतरादिभ्यः ॐ ॥

अधिकरणसंगतिमाह ॥ एवं सर्वस्येति ॥ अत्र श्रुतिसमन्वयेनोक्तस्य ब्रह्मणस्सर्वस्रष्टृत्वस्य सिद्ध्यै 'ता आप ऐक्षंत ता अन्नमसृजंत, अद्भ्यः पृथिवी'ति श्रुतिद्वयं परस्परविरुद्धं सदप्रमाणमुत नेति चिन्ता । [अत्र श्रुतिसमन्वयेनोक्तं ब्रह्मणः सर्वस्रष्टृत्वादिकं किमयुक्तमुत युक्तमिति चिन्ता । तदर्थं 'ता अन्नमसृजंत अद्भ्यः पृथिवी'ति श्रुतिद्वयं किं परस्परविरुद्धमुत नेति] तदर्थं 'ता अन्न'मिति श्रुतावन्नशब्दः किं प्रसिद्धान्नपरः किंवा प्रकरणादिना पृथिवीपर इति । अत्र 'ता अन्नमसृजंत, अद्भ्यः पृथिवी'ति श्रुत्योरन्यतराप्रामाण्यमात्रेण जन्मादिसूत्राक्षेपायोगात्, द्वयोः समबलत्वेनागृह्यमाणविशेषत्वाच्चोभयाप्रामाण्येन पूर्वपक्षितम् । वियदाद्यधिकरणेषु तु वियदाद्युत्पत्तिश्रुतिमात्राप्रामाण्येन जन्मादिसूत्राक्षेपसंभवादनुत्पत्तिश्रुतेः प्रबलत्वेन गृह्यमाणविशेषत्वाच्चैकाप्रामाण्येन पूर्वपक्षितम् । अतएव तत्र न्यायविवरणेऽनुत्पत्तिश्रुतेः प्राबल्यायानुभवाद्यनुगृहीतत्वमुक्तम् । नचेहापि न्यायविवरणेऽन्नश्रुतेः प्राबल्याय बहुवाक्यानुसारितोक्तेति शंक्यम् । यतोऽन्नश्रुतेः प्रकरणानुगृहीतपृथिवीश्रुतिविरोधोपयुक्तसमबलत्वायैव बहुवाक्यानुसारितोक्ता । नतु प्राबल्याय । अतएवोक्तं टीकायां 'नचान्नशब्दस्य पृथिव्यर्थत्वेनाविरोधः । प्रसिद्धान्नपरत्वस्वीकारे बहुवाक्यानुसारित्वगुणलाभा'दिति । 'अद्भ्यो वा अन्न'मित्यादिन्यायविवरणोदाहृतबहुवाक्यानां प्रसिद्धार्थपरत्वरूपगुणलाभादित्यर्थः । [हेत्वंतरमाह ॥ तस्मादिति ॥] न केवलं प्रसिद्धान्नपरत्वे बहुवाक्यानु-

सारिता । किन्तु लिङ्गद्वयमप्यस्तीत्याह ॥ तस्मादित्यादिना ॥ उक्तश्रुतिविरोधादिति ॥ 'ओषधीभ्योऽन्नमिति श्रुतिविरोधादित्यर्थः। भूतविषयत्वादिति अनेन प्रसिद्धान्नविषयतैवनिरस्यते । नतु भूताभिमानिदेवताविषयतापीति ज्ञेयम् । तेजोशितमितिवदिति ॥ तत्र यथा तेजश्शब्दस्तैजसपरः तथा पृथिवीवाचकोऽन्नशब्दः पार्थिवपर इत्यर्थः । अत्र सूत्रे परव्याख्या न विरुद्धा । ॥ इति पृथिव्यधिकरणम् ॥ ६ ॥

---

## अथ तदभिध्यानाधिकरणम्

## ॥ ॐ तदभिध्यानादेव तु तल्लिंगात्सः ॐ ॥

अधिकरणसंगतिमाह ॥ एवमिति ॥ अत्र पूर्वोक्तं विष्णोः सर्वसंहर्तृत्वं किं रुद्रस्य सर्वसंहर्तृत्वश्रुतिविरुद्धं न वेति चिन्ता । तदर्थं 'प्राणानां ग्रन्थिरसि रुद्रो माविशांतक' इति रुद्रस्य संहर्तृत्वश्रुतिः किं स्वातन्त्र्येण सर्वसंहर्तृत्वपरा उत कतिपयसंहारे रुद्रस्य द्वारत्वमात्रपरेति । तदर्थं पितुरन्यस्यैव मारकत्वदर्शनयुक्त्यनुगृहीता रुद्रस्य संहर्तृत्वश्रुतिः किं 'यमप्येति भुवनं सांपराये स नो हरि'रिति विष्णोः सर्वसंहर्तृत्वश्रुतितः प्रबलोत नेति । तदर्थं लोके पितुरमारकत्वे पितृत्वमेव तन्त्रं (उत्पादकस्यामारकत्वे किमुत्पादकत्वमेवप्रयोजकं) किंवा ममतादिदोषयुक्तत्वमिति । यद्यपि सृष्टेरनंतरा स्थितिः तथापि विष्णोः स्थितिहेतुतायामविवादात्पितुरन्यस्यैव मारकत्ववत्स्थापकत्वस्यादृष्टेश्च सृष्ट्यनंतरं लयविचारो युक्तः । 'पितुरन्यस्यैव मारकत्वादृष्टे'रिति न्यायविवरणोक्तां पूर्वपक्षयुक्तिं विवृणोति ॥ पितुरन्यस्यैवेत्यादिना ॥ अत्र पितृशब्देन न केवलं जनको विष्णुः किन्तु रक्षकश्च । नच रक्षकस्य संहर्तृत्वं युक्तमिति सूचितम् । 'तस्याभिध्याना'दित्यस्येच्छावत्त्वरूपेऽभिध्यातृत्वे श्रुतित्वेपि जन्मादिसूत्रोक्ते प्रयत्नवत्त्वरूपे कर्तृत्वे लिङ्गत्वात्सूत्रे लिङ्गशब्दो युक्त इत्यभिप्रेत्य इच्छायाः प्रयत्ने लिङ्गत्वं प्रश्नपूर्वकं दर्शयति ॥ किंचातइत्या-

दिना ॥ तत्वभावादित्यस्य व्याख्या यथार्थध्यानादिति ॥ ननु 'किमु सादेर्जगत' इति पूर्वभाष्येऽनुषक्तेन 'तत्कर्तृत्वं प्रतीयत' इत्यनेनैव जगत्संहर्तृतोक्ता । सैव 'इत्येतस्मादेवसंहारकर्ते'त्युत्तरभाष्ये संहारकर्तृत्वे हेतुत्वेनोच्येत । तद्युक्तम् । साध्यावैशिष्ट्यादित्याशंक्य पूर्ववाक्योक्त्याशक्त्योत्तरवाक्योक्तः प्रयत्नः साध्यते । अतो न दोष इत्याह । कर्ता विष्णुरितिप्रतीयते ॥ शक्तस्यैव तत्संभवादिति ॥ अत्रेति भाष्यप्रतीकम् । तस्यार्थः परतन्त्रेपीति ॥ पूर्वत्रसंबध्यत इति ॥ पूर्वत्रापि संबध्यत इत्यर्थः । अन्यथा 'ननु सर्वात्मनेरित'मित्यस्य पूर्वस्य विशेषणस्य 'एकदेशक्रियाचे'त्यनेन विशेष्येणानन्वयादसंगतिः स्यात् । उत्तरं च समस्तमिति विशेषणं विशेष्यसाकांक्षत्वादनन्वितं स्यादिति भावः । 'लोकपितृवैरूप्याद्विष्णोरिति न्यायविवरणोक्तां सिद्धान्तयुक्तिं विवृणोति ॥ ममत्वादिदोषराहित्येन लोकपितृवैलक्षण्यादिति ॥

अन्येतु 'आकाशाद्वायु'रित्यादावाकाशाद्यभिमानिदेवानामीश्वरानधिष्ठितानां स्वतन्त्राणामेवोत्तरोत्तरभूतकर्तृतोच्यत इति प्राप्ते ईश्वराधिष्ठितानां परतन्त्राणामेव सोच्यत इत्याहुः । तन्न । त्वयाऽऽकाशादिशब्दानां भूतार्थत्वस्य पञ्चम्याश्चोपादानार्थत्वस्योक्तत्वेनाभिमान्यार्थत्वस्य निमित्तार्थत्वस्य चाभावात् । अभ्युपगमवादेन सिद्धांतोक्तेश्च क्लिष्टत्वात् । किञ्च 'यः पृथिवीमंतरोयमयती'ति त्वदुक्तस्य नियंतृत्वलिङ्गस्य 'तल्लिंगादि'त्यनेनैवोक्तत्वात् 'सोकामयते'त्यभिधानस्य च देवतानामीश्वराधिष्ठतत्वे लिङ्गत्वायोगात्सूत्रे 'तदभिध्याना'दिति व्यर्थम् । नचाकाशादित्यादिवाक्यं तत्तद्देवतानां कर्तृत्वपरं तत्तद्भूतानामुपादानत्वपरं चेति द्वेधा पूर्वपक्षे प्राप्ते तत्तद्भावापन्नस्य ब्रह्मण उपादानत्वपरत्वमिति सिद्धांत इति युक्तम् । त्वदीयभाष्योक्तस्यास्य पक्षस्य भामतीकल्पतरुभ्यामेव 'तेजोऽत' इत्यनेन गतार्थत्वेन निरस्तत्वात् । अपिच मम रीत्या सयुक्तिकया [पितुरन्यस्यमारकत्वयुक्त्यनुगृहीतया 'रुद्रो माविशांतक' इति भाष्योदाहृतया] ब्रह्मणोन्यस्य लयकर्तृत्वश्रुत्या ब्रह्मणो लयकर्तृत्वश्रुतेरवश्यनिरसनीयं विरोधं 'तस्याभिध्याना'दिति समानाक्षरश्रुतिविषयेण 'तदभिध्याना'दिति

सूत्रेण निरस्य ब्रह्मणो लयकर्तृत्व इह स्थापिते उत्तराधिकरणे लयक्रम-विचारः संगतो नान्यथा ।

सूत्राक्षरार्थस्तु—तदभिध्यानात् तस्याभिध्यानादिति । श्रुत्युक्ताद्धरेरनादिबन्धसंजिहीर्षारूपात् । तल्लिंगात् सादिजगत्संहर्तृत्वसाधकलिङ्गात् । योऽवादिस्रष्टृत्वेन प्रकृतः यश्च जनकत्वेनामारकतया शंकितः यश्च 'ॐतत्सदितिनिर्देशो ब्रह्मणस्त्रिविधः स्मृत' इति स्मृतौ तच्छब्दवाच्यत्वेनोक्तः 'स नो हरिर्घृत'मिति श्रुतौ च स इत्युक्तः स एव हरिः संहर्ता । तुशब्दस्त्वभिध्यानगतस्य संजिहीर्षात्वरूपविशेषस्य द्योतकः । एवकारस्तु कैमुत्यन्यायसूचक इति भाष्य एवोक्तम् ॥

॥ इति तदभिध्यानाधिकरणम् ॥ ७ ॥

---

## अथ विपर्ययाधिकरणम्

## ॥ ॐ विपर्ययेण तु क्रमोऽत उपपद्यते च ॐ ॥

संगतिमाह ॥ सर्वभगवतेति ॥ अत्र श्रुतिसमन्वयेनोक्तस्य विष्णोस्स्रष्टृत्वसंहर्तृत्वादेस्सिद्धये 'व्युत्क्रमाद्विलयश्चे'ति श्रुतिः किं 'क्रमाद्विलीयत' इति श्रुत्या लोके प्रायेणोत्पत्तिक्रमेणैव लयदर्शनयुक्त्यनुगृहीतया बाधितोत नेति चिन्ता । (उक्तं विष्णोः स्रष्टृत्वादिकमयुक्तं न वेति चिन्ता । तदर्थं श्रुतिरप्रमाणमुत नेति । तदर्थं 'व्युत्क्रमाद्विलयश्चे'ति श्रुतिः किं 'क्रमाद्विलीयत' इति श्रुत्या लोके प्रायेणोत्पत्तिक्रमेणैव लयदर्शनयुक्त्यनुगृहीतया बाधितोत नेति ।) क्रमादिति श्रुतौ क्रमशब्दः किमनुक्रमपरः किंवा व्युत्क्रमपर इति । तदर्थं लोके प्रथमोत्पन्नानां प्रथमं नाशे किं प्रथमोत्पत्तिः प्रयोजिका किं वा सामर्थ्यविशेषाभाव इति । 'लोकानुसारित्वं बहुवाक्यानुरोधश्चे'ति न्यायविवरणोक्तं पूर्वपक्षयुक्तिद्वयं विवृणोति ॥ लोकानुकूलत्वगुणेनेत्यादिना ॥ क्रमव्युत्क्रमयोः क्रमपदप्रवेश इति ॥ अनुक्रमव्युत्क्रमयोः क्रमपदवाच्यतया प्रवेश इत्यर्थः ।

अनेन च 'क्रमवाक्यस्य सावकाशत्व'मिति न्यायविवरणोक्ता सिद्धांतयुक्तिः क्रमपदमक्रमस्य व्यावर्तकम् । नतु व्युत्क्रमस्य । आरोहक्रमादवरोहक्रमस्येवानुक्रमवद्व्युत्क्रमस्यापि क्रमत्वदिति विवृतेति द्रष्टव्यम् । सप्तमीपक्ष इव प्रथमापक्षेपि सन्निधानशब्दान्वयो नेत्यत आह ॥ सन्निधीयतेत्रेति ॥

सूत्राक्षरार्थस्तु ॥ 'क्रमाद्विलीयत' इति श्रुत्युक्तः क्रमस्तु अतः प्रकृतात् सृष्टिक्रमात् विपर्ययेण भवति । अत एव 'व्युत्क्रमाद्विलयश्चेति वाक्यशेषादेव उपपद्यते च विपर्ययः पूर्वोत्पन्नानां सामर्थ्याधिक्यादिति ।

अन्येतु 'यत्प्रयन्तीत्यादिषु लयस्यैव श्रवणात् सृष्टाविव लये क्रमस्याश्रवणात्क्रमापेक्षायां श्रौते लये श्रौतः सजातीयः सृष्टिक्रम एव ग्राह्य इति प्राप्ते लये सृष्टिक्रमग्रहे उपादानलये उपादेयस्थितिः स्यात् । सा चायुक्ता । तस्माद्विजातीयोपि दृष्टः सृष्टिविपरीतक्रम एव ग्राह्यः । दृष्टो हि मृदो जातस्य घटस्य मृद्यप्यय इति सिद्धान्त इत्याहुः ॥ तन्न ॥ अस्य विचारस्य श्रुतेः केनचित् सह विरोधानिरासकत्वेनाध्यायासंगतेः । मम रीत्या लोकानुसारित्वादियुक्त्यनुगृहीतया 'क्रमद्विलीयत' इति भाष्योक्तश्रुत्या 'व्युत्क्रमाद्विलयश्चे'ति भाष्योक्तश्रुतेर्विरोधनिरासेन साक्षात् संगतिसंभवे प्रासंगिकत्वायोगाच्च । 'व्युत्क्रमाद्विलयश्चे'ति भाष्योक्तव्युत्क्रमश्रुतौ

'जगत्प्रतिष्ठा देवर्षे पृथिव्यप्सु प्रलीयते ।
ज्योतिष्यापः प्रलीयन्ते ज्योतिर्वायौ प्रलीयत ॥'

इति त्वदुक्तस्मृत्यनुमितश्रुतौ च लये क्रमस्य श्रुतत्वेन तदश्रवणस्वीकारेण पूर्वोत्तरपक्षयोरयोगाच्च । भस्मीभूतपटादेस्तंतुषु लयादृष्ट्या दृष्टानुसारेण कार्यस्य साक्षात्कारणे लय इति सिद्धान्तोक्त्ययोगाच्च । तेजआदीनामीक्षितृत्वादिना चेतनत्वात्पित्रादिलयानंतरमेव च प्रायः पुत्रादिलयदृष्टेर्दर्शनानुसारेण तेजआदीनां लयानंतरमेवाबादिलयप्राप्तेश्च । एतेन 'जगत्प्रतिष्ठेत्यादिस्मृतिर्न्यायमूला । न श्रुतिमूले'ति भामत्युक्तं परास्तम् ॥

॥ इति विपर्ययाधिकरणम् ॥ ८ ॥

अथ अन्तराविज्ञानाधिकरणम्

## ॥ ॐ अंतरा विज्ञानमनसी क्रमेण तल्लिंगादितिचेन्नाविशेषात् ॐ ॥

पूर्वोक्तस्य व्युत्क्रमेण लय इत्यस्य क्वचिदपवादशंकानिरासात्संगतिः। अत्र किं भाष्योदाहृता सर्वत्रापि व्युत्क्रमेण लयश्रुतिः 'यच्छेद्वाङ्मनसी-प्राज्ञस्तद्यच्छेज्ज्ञानआत्मनि' इति मनोविज्ञानयोः सृष्टिक्रमेण लयप्रति-पादकश्रुत्या विरुद्धा न वेति चिन्ता। तदर्थं विज्ञानतत्वे लीयमानं मनस्तत्वं किं विज्ञानतत्त्वस्य कारणमुत नेति। तदर्थं 'मनसश्च विज्ञान-' मिति सृष्टिश्रुतौ मनोविज्ञानशब्दौ किं मनस्तत्वविज्ञानतत्त्वपरौ किंवांतः-करणावबोधपराविति। तदर्थं तौ शब्दौ किं तत्वयोरेव मुख्यौ किंवांतः करणावबोधयोरपीति। 'लोकदृष्ट्यनुसारा'दिति न्यायविवरणोक्तां पूर्व-पक्षयुक्तिं विवृणोति। लोकानुकूलं चैतदित्यादिना॥ समसामर्थ्य-स्यापि संभवादिति॥ सृष्टौ मनसः पूर्वमवस्थानात्प्रलये विज्ञानस्य पश्चादव-स्थानात् समसामर्थ्यं संभाव्यत इत्यर्थः। 'भजओभागसेवयो'रिति वचनाद्भागार्थस्य भजतेर्भावेक्तप्रत्ययांताद्भक्तशब्दाद्वा क्तिन्प्रत्यांताद्भक्ति-शब्दाद्वा 'तस्येद'मिति संबन्धसामान्ये विहिताण्प्रत्यांतस्य भाक्तशब्दस्य भागविषयवाचकत्वं युक्तमित्यभिप्रेत्याह। अयं च व्यपदेश इन्द्रियाव-बोधाख्यभागविषय इति॥

यद्यपि मनश्शब्दस्य मनस्तत्वमंतःकरणरूपमिंद्रियं चेत्येकोराशिरर्थः। उभयत्रापि प्रयोगात्। एवं विज्ञानशब्दस्यापि विज्ञानतत्त्वमवबोधश्चेत्येको राशिरर्थः। तथापि 'मनसश्च विज्ञान'मिति वाक्यस्थौ मनोविज्ञानशब्दा-विन्द्रियावबोधरूपभागयोरेव वर्तेते। नतु मनस्तत्वविज्ञानतत्वयोरिति 'मनसश्चविज्ञान'मिति व्यपदेशो भागविषये इत्यर्थः। 'अंतस्तद्व्यक्त्य-पेक्षये'त्यादिभाष्यं प्रकृतानुपयोगीत्याशंक्य मैवम्। तत्वानां सर्वसृष्टिर्हि-'पराद्व्यक्तमुत्पन्न'मित्यादिभाष्योदाहृतस्मृत्युक्तक्रमेणैव। क्वचित्तत्वाना-मेवायं पूर्वपक्ष्यभिप्रेतो विपरीतक्रमः श्रूयते चेत् सा श्रुतिः ब्रह्मांडांतः

सृष्ट्यभिप्राया । बहुश्रुतिसंग्रहरूपा स्मृतिस्तु बाह्यसृष्ट्यभिप्राया । यद्वा विपरीतक्रमश्रुतिर्ज्ञानिनं प्रति स्वदेहे तत्वाभिमानिदेवानामापरोक्ष्यक्रमाभिप्राया । द्वारपालादिदर्शनानंतरमन्ते राज्ञ इवाधमदेवतादर्शनानंतरमंते हरेर्दर्शनादिति परिहारद्वयकथनार्थत्वादुत्तरभाष्यस्येत्यभिप्रेत्योत्तरभाष्यं व्याचष्टे । क्वचित्तत्वानामेवेत्यादिना ॥ सूत्राक्षरार्थस्तु ॥ तद्व्यपदेशस्तु मनसश्च विज्ञानमिति मनोविज्ञानयोः कार्यकारणव्यपदेशस्तु भाक्तः स्यात् इन्द्रियाववोधरूपभागविषयः स्यात् । चराचरात्मकसर्वविषयेष्वपि मनोभावरूपेणालोचनेनाववोधस्य भावित्वात् उत्पद्यमानत्वादिति । समासांतर्गतं तद्भावंप्रतिविशेषणस्यापि चराचरव्यपाश्रयत्वस्य पृथगुपादानं तु यद्यपि तद्व्यपदेशः मनोविज्ञानशब्दरूपो व्यपदेशः चराचरव्यपाश्रयः टीकोक्तरीत्या राशिद्वयविषयः । तत्वयोरचरत्वात् इन्द्रियाववोधयोस्तु चंचलत्वेन चरत्वात् । तथापीह भागविषयः । इति योजनांतरप्रदर्शनार्थमिति द्रष्टव्यम् ।

अन्येतु 'आत्मन आकाश' इति तैत्तिरीयश्रुतिः

'एतस्माज्जायते प्राणो मनस्सर्वेंद्रियाणि च ।
खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी ॥'

इत्याथर्वणश्रुतिविरुद्धा । अत्र ह्यात्मानं भूतानि च अंतरा । तदन्तराले इन्द्रियमनसी आत्मजन्यत्वेनाम्नायेते । तस्मात्तैत्तिरीयोक्तक्रमभंग इति प्राप्ते करणानां 'अन्नमयं हि सोम्य मन' इत्यादिश्रुत्या भौतिकत्वेन भूतानन्तरमेवोत्पत्तिः । आथर्वणेचाम्नानक्रममात्रम् । अर्थक्रमस्य बलीयस्त्वात् । नतूत्पत्तिक्रमः । तस्माद्भूतोत्पत्तिक्रमभङ्गो नेति सिद्धान्त इत्याहुः । तन्न । 'मनस्तत्वाच्चखादिक'मिति भाष्योक्तस्मृत्या तथा आकाशादूर्ध्वं तन्मात्राणि भूतादौ लीयते । भूतादिर्महति लीयते । महानव्यक्ते लीयत इत्यादिलिङ्गैः । तथा आथर्वण एव 'खं वायु'रित्याद्युत्तरवाक्य इव 'एतस्माज्जायते प्राण' इत्यादावपि पाठक्रमेण च मन आद्यनन्तरमेवाकाशोत्पत्तेः सिद्धेः । अन्नमयत्वश्रुतिस्तु 'अन्नमशितं त्रेधा विधीयत' इति वाक्यशेषात् पार्थिवेनान्नेन मनस उपचरमाह । नतु

पृथिवीभूतान्मनस्तत्वोत्पत्तिम् । किञ्चाथर्वेण आत्मनो भूतानां चांतराले प्राणस्यापि श्रुतत्वात्सूत्रे तत्त्यागेन विज्ञानमनसोरेवोपादानं तथा 'विज्ञानतत्वं महत' इत्यादिषु विज्ञानतत्वे रूढस्य विज्ञानशब्दस्य 'विज्ञायतेऽनेने'ति भामत्युक्तमिन्द्रिये यौगिकत्वं तथा यौगिकेन विज्ञानशब्देनैव मनसोप्युक्तिसंभवेन सूत्रे पृथङ्मनःशब्दः तथा मद्रीत्या 'विज्ञानमनसी' इत्यस्य द्वितीयांतस्य विज्ञानमनसी अंतरा विनेत्यनध्याहारेणैवान्वयसंभवे अंतरेत्यस्याध्याहृताभ्यामात्मानं भूतानि चेत्याभ्यां द्वितीयांताभ्यां विज्ञानमनसी इत्यस्य प्रथमांतस्याध्याहृतेनाम्नायेते इत्यनेनान्वयः तथा क्रमस्यांतरालार्थेनांतराशब्देनैवोक्त्या पुनः सूत्रे क्रमशब्दः तथा क्रमशब्दस्य पूर्वसूत्रप्रकृतलयक्रमपरत्वत्यागेन सृष्टिक्रमपरत्वं तथा अस्याधिकरणस्य सृष्टिक्रम प्रकरणादुत्कर्षः तथा सौत्राविशेषशब्दस्य भामत्यां क्लेशेनोक्तक्रमभङ्गपरत्वं च न युक्तम् ।

॥ इति अंतराविज्ञानाधिकरणम् ॥ ९ ॥

---

## अथ आत्माधिकरणम्

## ॥ ॐ नाऽत्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः ॐ ॥

एवं ब्रह्मान्यस्य सर्वस्य व्युत्क्रमेण लये श्रुत्योक्ते तर्हि ब्रह्मणोऽपि तथैव सोस्त्विति शंकोदयात्संगतिः । अत्र पूर्वोक्तं ब्रह्मणस्सर्वस्रष्टृत्वादिकं ब्रह्मणो लयश्रुतिविरुद्धं न वेति चिंता । तदर्थं 'स इदं सर्वं विलाप्यांतस्तमसि निलीन'इति ब्रह्मणो लयश्रुतिः किं देहनाशरूपविनाशपरोतापिहितत्वपरेति । तदर्थं निलीनशब्दस्य विनाशरूपार्थत्यागेनापिहितत्वपरत्वे किं ज्ञापकं नास्त्युतास्तीति । असंभवस्त्वित्यत्र ब्रह्मणोऽनुत्पत्तिरुक्ता । अत्र त्वविनाश इति भेदः । न्यायविवरणोक्तां लयश्रुत्यनुग्राहिकां पूर्वपक्षयुक्तिमाह । चेतनत्वादिति । असंभवस्त्वित्यधिकरणन्यायेन गतार्थत्वं निरस्यति । नच वक्तव्यमिति ।

अन्येतु चराचरेत्यधिकरणे चैत्रो जात इति व्यपदेशाज्जात-कर्मादिविधानाच्च प्रतिशरीरं जीव उत्पद्यत इति प्राप्ते प्रतिशरीरं जीवोत्पत्तौ शास्त्रोक्तस्वर्गादिफलायोगाज्जन्मव्यपदेशो जायमानस्थावरजंगमात्मकशरीरसंबंधाद्भाक्तो गौण इति सिद्धांतः । नात्मेत्यधिकरणे तु 'सर्वे एत आत्मानो व्युच्चरंती'त्यादिश्रुत्या वियदादिवत्प्रतिसर्गं ब्रह्मणो जीव उत्पद्यत इति प्राप्ते 'तत्सृष्ट्वा तदेवानुप्राविश'दित्यादि श्रुत्या सृष्टानुप्रविष्टब्रह्मरूपस्य जीवस्य नित्यब्रह्मभेदायोगात्कृतहानादिप्रसंगाच्च नोत्पत्तिरिति सिद्धांत इत्याहुः । तन्न । द्वितीयसिद्धांतेन दंडापूपनयहतस्याद्यपूर्वपक्षस्यानुदयात् । तद्व्यपदेश इति सूत्रस्थस्य 'विज्ञानमनसी' इति पूर्वसूत्रप्रकृतविज्ञानमनःक्रमपरामर्शितच्छब्दस्याप्रकृतजीवजन्मविषयत्वायोगाच्च । त्वद्रीत्या देहात्मभेदसाधकेन 'एक आत्मनः शरीरेभावा'दित्यधिकरणेनाद्यस्य गतार्थत्वाच्च । चैत्रो जात इत्यादेस्त्वन्मते गौरोहमित्यादिवदध्यासत्वेन सूत्रे गौणत्वोक्त्ययोगाच्च। द्वितीये 'तत्सृष्ट्वा तदेवानुप्राविश'दिति श्रुत्या सृष्टानुप्रवेशविशिष्टस्यैव जीवत्वेन तस्य नित्यत्वोक्त्ययोगाच्च । चिन्मात्रानादित्वं तु 'असंभवस्त्वि'त्यनेनैव सिद्धं । सिद्धांतेपि सांतःकरणावच्छिन्नस्य कर्तुस्सदित्वेन कृतहान्याद्यापातस्यापरिहाराच्च । द्युभ्वाद्यधिकरणन्यायेन सौत्रात्मशब्दस्य परमात्मन्येव मुख्यत्वेन द्वितीयस्य भाष्योक्तरीत्याऽवश्यं विचार्यब्रह्मलयविषयताया एवोचितत्वाच्च । न कर्मेत्यत्र संसारानादित्वस्योक्तत्वेन द्वितीयस्य तेन गतार्थत्वाच्च । एतेन 'नात्मे'त्यस्य जीवानुत्पत्तिपरतां वदतां केषांचित्पक्षोपि निरस्तः ।

॥ इति आत्माधिकरणम् ॥ १० ॥

---

अथ ज्ञाधिकरणम्

॥ ॐ ज्ञोऽत एव ॐ ॥

एवं सूचीकटाहन्यायेनाल्पमधिभूतादिविचारं कृत्वेदानीमापाद-

समाप्ति बहुजीवविचारः क्रियत इति संगतिमाह ॥ एवमिति ॥ अत्रोक्तं ब्रह्मणस्सर्वस्रष्टृत्वं जीवानुत्पत्तिश्रुतिविरुद्धं न वेति चिंता। तदर्थं 'सर्व एत आत्मानो व्युच्चरंती'ति जीवोत्पत्तिश्रुतिः कारणाभावादियुक्त्यनुगृहीतया जीवनित्यत्वश्रुत्या बाधितोत नेति। तदर्थमुत्पत्त्यनुत्पत्तिश्रुती किमेकरूपोत्पत्तिविषये किं वोत्पत्तिश्रुतिः पराधीनविशेषावाप्तिपरा। अनुत्पत्तिश्रुतिस्तु स्वरूपोत्पत्तिनिषेधपरेति। पूर्वपक्षे जन्मादिसूत्राक्षेपाय भाष्योक्तनित्यत्वश्रुतेरनित्यत्वश्रुतितः प्राबल्यार्थं न्यायविवरणोक्तां पूर्वपक्षयुक्तिमाह ॥ अनादित्वादिति ॥ उत्पत्तेरेवाभावप्रसंगादिति ॥ श्रौतप्रागभावशून्यत्वं जीवेन चेद्घटादेरप्युत्पत्तिर्न स्यात्। प्रमितत्वाविशेषादित्यर्थः। यद्वा प्रागभावशून्यत्वमनुत्पत्तितोऽन्यन्न चेत् प्रागभाव उत्पत्तितोऽन्यो न स्यात्। तथा च प्रागभावहीनस्यात्मलाभरूपोत्पत्तिरेव न स्यादित्यर्थः। एवंभूतानामपीति ॥ स्वरूपोत्पत्तिमत्त्वेनाश्रुतानां प्रत्युतानुत्पत्तिमत्त्वेन श्रुतानामपीत्यर्थः ॥ असंप्रतिपत्तेरिति ॥ उत्पत्तिमतां भूताकाशादीनां कारणशून्यत्वे कारणशून्यानां चाव्याकृताकाशादीनामुत्पत्तिमत्वेऽसंप्रतिपत्तेरित्यर्थः। ननु जीवस्य पराधीनविशेषावाप्तिरूपोत्पत्तिर्वियदधिकरणन्यायसिद्धा। स्वरूपेणोत्पत्तिस्तु नेष्टेतिव्यर्थमिदमिति चेन्न। उत्पत्तिश्रुतिः पराधीनविशेषावाप्तिरूपोत्पत्तिपरा चेदनुत्पत्तिश्रुतिरपि ब्रह्मणीव जीववियदादावपि तदभावपरा। अनेकार्थत्वस्यान्याय्यत्वदित्यतीतसर्वाक्षेपेण पूर्वपक्षिते ब्रह्मणि पराधीनविशेषावत्तिरूपोत्पत्तिश्रुतिर्नास्ति। जीवादौ त्वस्तीति तदविरोधायानेकार्थत्वं न्याय्यमितीह 'युक्तेश्चे'ति सूत्र एवोक्तेः। अत एव 'असंप्रतिपत्ते'रिति टीकायां सर्वमाक्षिप्तम्। इह जीवमात्र उक्ता देहयोगरूपोत्पत्तिः 'एतेने'त्यत्र मुख्यप्राणे विशेषयुक्त्याऽऽक्षिप्य समाहितेति न तेनास्यगतार्थता। जीवार्थं प्रकरणांतरस्य कृतत्वादुत्पत्तिश्रुत्यविरोधोऽप्ययं लयश्रुतिविरोधानंतरमुक्तः।

अन्येतु। आत्मनो ज्ञानमागंतुकम्। इंद्रियसंप्रयोगादिहेत्वंतरानुविधानात्। घटस्य लौहित्यवदिति प्राप्ते आत्मा ज्ञानरूपः। अत एव

अनुत्पत्तेरेव। स्वयंज्योतिरित्यादिश्रुतेश्च। इंद्रियसंप्रयोगादिस्तु विषयविशेषपरिच्छेदार्थ इति सिद्धांत इत्याहुः। तन्न। युक्त्यविरोधकीर्तनस्य पादासंगतेः। सौत्रेण ज्ञातृवाचिना ज्ञशब्देन ज्ञानत्वानुक्तेश्च। अंतःकरणावच्छिन्नस्य ज्ञातृत्वेपि तस्य जन्यत्वेनानुत्पत्तिज्ञत्वयोरैकाधिकरण्यासिद्धेः। अनुत्पत्तिमात्रेण ज्ञत्वासिद्धेश्च। ज्ञानरूपब्रह्माभेदस्य चाप्रकृतत्वेन सौत्रेणातःशब्देनानुक्तेः।

॥ इति ज्ञाधिकरणम् ॥ ११ ॥

---

अथ उत्क्रान्त्यधिकरणम्

## ॥ ॐ उत्क्रांतिगत्यागतीनाम् ॐ ॥

जीवे धर्मिण्युत्पत्त्यनुत्पत्ती चिंतिते। अथ तद्धर्मे परिमाणेऽणुत्वमहत्वे चिंत्येते इति संगतिः। अत्र ब्रह्मणि श्रुतिसमन्वयसिद्ध्यर्थं जीवस्याणुत्वोत्क्रमणादिश्रुतिः किं सर्वदेहसंबद्धस्पर्शादिज्ञानरूपयुक्त्यनुगृहीतया 'व्याप्ता ह्यात्मान' इति व्याप्तिश्रुत्या बाधितोत नेति चिंता। तदर्थं व्याप्तिश्रुतिः किं जीवविषयासर्वदेहसंबद्धस्पर्शादिज्ञानं चाणुत्वे नोपपद्यते अत व्याप्तिश्रुतिरीश्वरविषया सर्वदेहसंबद्धस्पर्शादिज्ञानं च जीवस्याणुत्वेप्यंशव्याप्त्यदिनोपपद्यत इति। तदर्थं व्याप्तिश्रुतौ श्रुतं बहुत्वं भिन्नाश्रितमित्युत्सर्गन्यायस्यापवादकं नास्त्यंशव्यस्त्यादिकं च न युक्तमुत सामान्यन्यायस्यापवादकमस्त्यंशव्यास्त्यादिकं चंदनवद्युक्तमिति। पूर्वपक्ष्यभिमतव्याप्तिश्रुतेः प्राबल्याय 'सर्वदेहस्पर्शज्ञाना'दिति न्यायविवरणोक्तां पूर्वपक्षयुक्तिमाह ॥ सर्वदेहेति ॥ सिद्धांतमाह ॥ सिद्धांतयदिति ॥ एतेन चैत्रभोगार्थस्यांकुरादेश्चैत्रादृष्टजन्यत्वादात्मसमवेतस्य चादृष्टस्य साक्षादंकुराद्यसंबंधादात्मनोऽकुरसंबंधावश्यंभावाद्विभुत्वमिति तार्किकोक्तं निरस्तम्। चैत्रभोगाहेतोरप्यंकुरात्मद्वारा तददृष्टसंबंधेपि तदजन्यत्वेनात्मद्वारकसंबंधस्यातंत्रतया प्रतियोग्यभाववा-

व्यवाचकज्ञानज्ञेयादाविवादग्रकार्ययोरपि संबंधांतरस्यैव वक्तव्यत्वात् । अस्ति हि कारीर्यदृष्टस्य वृष्ट्या सह तदुद्देशेन विहितक्रियाजन्यत्वरूपः संबंधः ॥ प्रसंगाच्चिंत्यत इति ॥ प्रस्तुतस्याणुत्वस्योत्क्रांतिमात्रेण सिद्धेरणुत्वसाधकाधिकरणमध्ये स्वातंत्र्यपारतंत्र्यादिचिंता प्रासंगिकीत्यर्थः । 'यस्य योगे दुहिता जायते दिव उभे अहनी सुदिने विवस्वतः ।' इत्युत्तरार्धं ऐतरेयभाष्योक्तरीत्या 'यस्य योग' इत्यनेन शरीराख्यरथस्य भगवदर्पणरूपः संबंधः, 'विवस्वत' इत्यनेन भगवान् 'दिवोदुहिते'-त्यनेन परोक्षज्ञानं, 'सुदिने अहनी' इत्यनेन जीवन्मुक्तिमुक्तीविवक्षिते इत्यभिप्रेत्य व्याचष्टे ॥ यत्संबंधादिति ॥ घटादिरूपस्यैव तत्र प्रतीयमानत्वादिति ॥ नीलघटादिसंबद्धबालार्कप्रभादौ प्रतीयमानामारुण्यादिकं तु न्यायमतेपि न प्रभानिष्ठमिति भावः । किञ्च 'गुणादिपंचकस्य निर्गुणत्वनिष्क्रियत्वादिपरिभाषा नादरणीये'ति टीकाकारैरन्यत्रोक्तत्वाद्गुणेषु चतुर्विंशतिसंख्यावत् समवायादावेकत्वसंख्यावत् रूपे स्पर्शात्पृथक्त्ववत् जातेः सर्वगतत्वेन महत्त्ववच्च प्रभाया गुणत्वेपि तत्र रूपचलनादिकमप्यस्तु । अतएव दीपे गच्छति प्रभाया अपि गतिदर्शनात्क्रियावत्त्वेनालोकस्य द्रव्यत्वमिति निरस्तम् । घटे गच्छति तद्रूपस्यापि गतेः । अन्यथा श्येने चलत्यचलतः स्थाणोरिव रूपस्य तत्रैवावस्थितिः स्यादित्यपि द्रष्टव्यम् । द्रव्यत्वसाधकताविवादादिति ॥ उत्तराधिकरणे गुणस्यापि गंधस्य द्रव्यं विहायापि वृत्तेर्वक्ष्यमाणत्वादितिभावः । तदनुविधानादिनेति ॥ नच छायायां व्यभिचारः । भित्त्यादावचलेपि छायायाः सूर्यप्रातिलोम्येन चलनात् । लोके माणिक्यप्रभादौ तद्गुणत्वव्यवहारः, तेजोबलैश्वर्यमहावबोधसद्वीर्यशक्त्यादिगुणैकराशि'रिति स्मार्तस्तेजसि गुणत्वव्यवहारश्च गुणत्वे प्रमाणमिति दर्शयितुमादिशब्दः । अत एव टीकाकारैः शुद्धानंदोरुसंविद्द्युती'ति द्युतेर्गुणत्वमुक्तम् ॥ कारणांतरदर्शनादिति ॥ तदैव तत्रत्यतैजसपरमाणव एव द्व्यणुकादिप्रक्रमेणालोकमंडलमारभंत इत्यत्र मानाभावादिति भावः ॥ अप्रतीति-

प्रसंगादिति ॥ अकार्यद्रव्यत्वे परमाणुत्वापातेनाप्रत्यक्षत्वप्रसंगादित्यर्थः। तथासति प्रदीपानुविधानानुपपत्तेरिति ॥ उपलक्षणं चैतत्। निबिडावयवैंद्रनीलादावयवविकिरणस्यासंभावितत्वात्तत्र प्रभा न स्यादित्यपि द्रष्टव्यम्। बाहुल्यं स्यादिति। आद्यलक्षण इव द्वितीयादिक्षणेष्वप्यवयवानां विकिरणस्य न्याय्यत्वादिति भावः। पक्षांतरमाह। अप्रधानसाम्येन वेति ॥ शुभमादत्त इत्यर्थकेन श्रुतिसूत्रस्थेन स्वात्मशब्देनेश्वरस्योत्क्रांत्यादिना जीववन्न दुःखमिति दर्शितम् ॥

॥ इति उत्क्रांत्यधिकरणम् ॥ १२ ॥

---

## अथ व्यतिरेकाधिकरणम्

## ॥ ॐ व्यतिरेको गंधवत्तथा च दर्शयति ॐ ॥

यदि जीवोऽणुस्तर्हि योगिनो बहुरूपत्वायोग इति पूर्वाक्षेपेण पूर्वपक्षोत्थानात्संगतिः। अत्र जीवस्य बहुरूपत्वश्रुतिः किं निरवयवत्वयुक्त्यनुगृहीतयैकरूपत्वश्रुत्या बाधितोत नेति चिन्ता। [अत्र श्रुतिसमन्वयेनोक्तं विष्णोः सर्वस्रष्टृत्वादिकमयुक्तं नवेति चिन्ता। तदर्थं श्रुतिरप्रामाणं नवेति। तदर्थं जीवबहुरूपत्वश्रुतिः किं निरवयवत्वयुक्त्यनुगृहीतयैकरूपत्वश्रुत्या बाधितोत नेति] तदर्थं भिन्नांशरहितस्य बहुरूपत्वं न घटत उत योगसामर्थ्याद्घटत इति। तदर्थं योगिनोऽघटितघटनाशक्तिमत्त्वे किमीश्वरत्वमापद्यत उत नेति। न्यायविवरणोक्तां पूर्वपक्षयुक्तिमाह ॥ तथासतीति ॥ अत्र सूत्रे गंधवच्छब्देनात्यंतभेदहीनस्यापि व्यतिरेकसंभावको दृष्टांत उक्तः। दर्शयति च शब्दाभ्यां त्वत्यंताभिन्नस्यापि विभागरूपे व्यतिरेके श्रुतिस्मृती प्रमाणीकृते। तत्संभावकं योगसामर्थ्यं योगिनस्तादृशसामर्थ्यदातृत्वरूपमीश्वरसामर्थ्यं च श्रुतिस्मृतिभ्यामेवोक्ते इति न सूत्रे पृथगुक्ते। प्रमितेऽनन्यगतिके चाविरोध ईश्वरशक्त्येति नातिप्रसंगः ॥ ॥ इति व्यतिरेकाधिकरणम् ॥ १३ ॥

## अथ पृथगधिकरणम्

## ॥ ॐ पृथगुपदेशात् ॐ ॥

न जीवशक्तेरीशायत्तत्वम् । तयोरभेदादिति पूर्वाक्षेपेण पूर्वपक्षोत्थानात्संगतिः । अत्रोक्तं जीवान्यस्य ब्रह्मणो जगत्स्रष्टृत्वादिकं किं जीवब्रह्माभेदश्रुतिविरुद्धं न वेति चिन्ता । तदर्थं षड्विधतात्पर्यलिङ्गोपेतयाऽभेदश्रुत्या बाधितत्वाद्भेदश्रुतिरप्रमाणमुतोपजीव्यसयुक्तिकभेदश्रुतिबाधितत्वादद्वैतश्रुतिर्गौणीति । तदर्थमभेदश्रुतिः किमुपजीव्याविरोधाय पदद्वयलक्षणयैक्यपरोत तदविरोधाय तत्पदमात्रस्य गौणार्थत्वेन (गौणा) भेदपरेति ॥ सकलजगद्गुणसदृशगुणसदृशगुणात्मकत्वेनेति ॥ 'सर्वभूतगुणैर्युक्तं देवं त्वं ज्ञातुमर्हसी'ति भारते 'गामाविश्य च भूतानि धारयाम्यहमोजसे'त्यादिगीतासु च पृथिव्यादीनां ये धारकत्वादयो गुणास्तत्सदृशगुणात्मकत्वस्य ब्रह्मण्युक्तेरिति भावः । लक्षणावृत्तौ हीत्यादि ॥ परमते पदद्वये लक्षणा । मम मते तु तत्पदमात्रे गौणी । नचाल्पबाधेनैवोपपत्तौ बहुबाधो न्याय्य इति भावः । टीकायां सामानाधिकरण्यस्य गौणत्वोक्तेस्तु तत्पदं सर्वकर्तृत्वादिविशिष्टब्रह्मपरमेव । तत्त्वंपदयोः सामानाधिकरण्यं तु नाभेदपरम् । किन्तु सादृश्यपरमिति नाभिप्रायः । सिंहस्याध्ययनमित्यादौ सामानाधिकरण्याभावेऽपि सिंहप्रातिपदिकस्यैव सदृशे गौणत्वात् । सन्न्यायरत्नावल्यां 'तत्त्वमसी'त्यत्र जगत्स्रष्टृपरामर्शिनस्तच्छब्दस्यैव त्वंशब्दवाच्ये जीवे गौणवृत्त्याश्रयणेन 'तत्त्वंपदयोरुभयोरपि लक्षणाश्रयणस्य पराहतत्वा'दित्युक्तत्वाच्च । अपि तु तत्पदेनैव गौण्या वृत्त्या सादृश्ये लब्धे परस्परान्वितानेकप्रकृतिनिष्ठैकविभक्तिरूपसामानाधिकरण्यार्थस्य मुख्यस्य तत्पदशक्यतावच्छेदकेन ब्रह्मत्वेन रूपेण ब्रह्माभेदस्य जीवेऽसत्त्वेप्यमुख्यस्य चेतनत्वादिरूपेणाभेदस्य सत्त्वात्सामानाधिकरण्येनामुख्याभेदलाभ इत्यभिप्रायः । अस्ति हि सिंहश्चैत्र इत्यत्रापि चैत्रे सिंहत्वेन रूपेण सिंहाभेदाभावेपि शूरत्वेन तदभेदः । एतदेवाभिप्रेत्यानुव्याख्याने—

'अतोऽभेदवदेवैताः श्रुतयः प्रवदंति हि ।
पौराणानि च वाक्यानि सादृश्याभेदसंश्रया'दिति,
चेतनत्वादिसादृश्यं यद्यभेद इतीष्यते ।
अंगीकृतं तदस्माभिर्न स्वरूपैकता क्वचि'दिति चोक्तम् ।

यद्यपि तच्छब्दस्य तत्सदृशेर्थे सति तस्य गौणार्थतावच्छेदकेन सादृश्येनैव रूपेण त्वंपदार्थजीवाभेदोमुख्य एव । तथापि शक्यतावच्छेदकेन ब्रह्मत्वेन रूपेणाभेदो न मुख्य इति द्रष्टव्यम् ॥ न हि लिङ्गानीति ॥ यद्यपि लिङ्गानि मानांतराविरोधे मुख्यार्थे तात्पर्यबोधकान्येव । तथापि प्रकृते मानांतरविरोधान्मुख्यार्थे तात्पर्यं परेणैव त्यक्तम् । अमुख्यार्थमध्ये गौणे न तात्पर्यम् । किन्तु लाक्षणिक एवेत्यत्र तु लिङ्गानि न शक्तानीति भावः । अत्राभेदश्रुतेरर्थांतराणि उपजीव्यप्रमाणविरोधः परकीयार्थे तात्पर्यलिङ्गविघटनं स्वमते तत्समर्थनं भेदे बहुप्रमाणानि च भाष्यकारादिभिरन्यत्रोक्तानि । तत्संग्रहश्च न्यायामृते जीवेश्वरभेदप्रकरणेऽस्माभिः कृतो द्रष्टव्यः ॥ ॥ इति पृथगधिकरणम् ॥ १४ ॥

---

## अथ यावदधिकरणम्

## ॥ ॐ यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॐ ॥

'बन्धान्मोक्षं तत एवाभिवांछे'दिति पूर्वोक्तानादिबन्धानन्तमोक्षाक्षेपेण पूर्वपक्षोदयात् संगतिः । अत्र जीवस्य नित्यत्वश्रुतिरुत्पत्तिमत्त्वयुक्त्यनुगृहीतया जीवानित्यत्वश्रुत्या बाधितोत नेति चिन्ता । (अत्र श्रुतिसमन्वयेनोक्तं ब्रह्मणः सर्वस्रष्टृत्वादिकमयुक्तमुतनेति चिन्ता । तदर्थं किं श्रुतिरप्रमाणमुत नेति तदर्थं जीवस्य नित्यत्वश्रुतिरुत्पत्तिमत्त्वयुक्त्यनुगृहीतया अनित्यत्वश्रुत्या बाधितोत नेति ।) तदर्थं पूर्वाधिकरणोक्तजीवोपाधिविषया लयादिश्रुतिः किं जीवस्वरूपविषययानित्यत्वादिश्रुत्या विरुध्यते न वेति । तदर्थं किमुपाधिनाशे प्रतिबिंबभूतो जीवो नश्यत्युत नेति ।

तदर्थं जीवप्रतिबिंबनोपाधिः किं विनाशी बाह्योपाधिरेवोताविनाशी स्वरूपोपाधिरेवेति। नोऽत इत्यत्र जीवोत्पत्त्यनुत्पत्तिश्रुत्योर्विरोधे शंकिते उत्पत्तिश्रुतिरुपाधिविषया। अनुत्पत्तिश्रुतिः स्वरूपविषयेत्युक्तम्। इह तूपाध्युत्पत्तिस्वरूपानुत्पत्तिश्रुत्योरपि विरोधः। उपाध्युत्पत्तौ प्रतिबिंबभूत-जीवानुत्पत्त्ययोगादिति शंकिते येन स्वरूपोपाधिना जीवः प्रतिबिंबो न तस्योत्पत्तिः। यावदात्मभावित्वात्। यस्य तु बाह्योपाधेरुत्पत्तिर्न तेन जीवः प्रतिबिंब इत्युच्यत इत्यपुनरुक्तिः। 'आत्मा नित्यः जीवो नित्यः' इति पादद्वयं भारते भिन्नस्थलस्थं वाक्यद्वयम्। ततो न भारते पुनरुक्ति-रित्याह॥ वचनद्वयाच्चेति॥

॥ इति यावदधिकरणम् ॥ १५ ॥

---

## अथ पुंस्त्वाधिकरणम्

## ॥ ॐ पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् ॐ ॥

पूर्वत्र पृथगधिकरणीयाद्यसूत्रोक्तो 'बंधान्मोक्षं तत एवाभिवांछे' दित्युपदेश उपपादितः। इह तु तदीयसूत्रोक्तं तद्गुणसारत्वमुपपाद्यत इति संगतिः। अत्र जीवस्यानंदादिरूपत्वश्रुतिः किमनुपलब्धियुक्त्यनु-गृहीतयाऽनानंदादिरूपत्वश्रुत्या बाधितोत नेति चिंता। (अत्र श्रुति-समन्वयेनोक्तं ब्रह्मणः सर्वस्रष्टृत्वादिकं किमयुक्तं न वेति चिंता। तदर्थं श्रुतिरप्रमाणं न वेति। तदर्थं जीवस्यानंदादिरूपत्वश्रुतिः किमनुपलब्धि-युक्त्यनुगृहीतयाऽनानंदादिरूपत्वश्रुत्या बाधितोत नेति।) तदर्थं सतो-ऽप्यानंदादेरज्ञानावरणादनुपलब्धिरयुक्तोत युक्तेति। तदर्थमावरणमज्ञानं किं ज्ञानाभाव एव किं वा ज्ञानाभावादिनिमित्तं भावांतरमिति। भाष्यो-दाहृतायां 'विज्ञानात्मे'ति षट्प्रश्नोपनिषदि 'स आनंद'इति श्रुत्यंतरे च जीवलिंगाभावात्पूर्वपक्षानुदय इति न शंक्यम्। आद्यश्रुतौ 'प्राणा भूतानि संप्रतिष्ठंति यत्रे'ति वाक्यशेषे द्वितीयश्रुतौ च 'स परेणामुं

लोकं नीयते स विमुच्यत ' इति वाक्यशेषे जीवलिंगश्रवणादित्याह ॥ प्राणाभूतानीत्यादिना ॥ तस्यैवानुपपत्तेरिति ॥ ज्ञानाभाव एवाज्ञानमिति मते ॥ वैपरीत्यादिति ॥ शरीरस्यानंदाद्यनुभवरूपभोगायतनत्वेन भोगप्रतिबंधकत्वायोगादित्यर्थः । भाष्ये असुराणामावरणाभावेनानंदाद्यनुपलब्ध्यापादनमयुक्तम् । स्वरूपानंदादेरभावादेवानुपलब्ध्युपपत्तेः ।
अनावरणस्यानुपलब्धिं प्रत्यप्रयोजकत्वाच्चेत्याशंक्य आनंदाद्यनुपलब्धिर्नापाद्यते । किन्तु तत्प्रयोजिका सुखाद्युपलब्धिविरुद्धा स्वरूपदुःखाद्युपलब्धिरापाद्यत इत्याह ॥ दुःखाद्यनुभव एव भवेदिति ॥ भाष्ये मध्यममनुष्याणामानंदोपलब्धितदभावावापादितौ । तत्रोपलब्ध्यभावापादनमयुक्तम् । आवरणाभावस्यानुपलब्धिं प्रत्यप्रयोजकत्वादित्याशंक्य सुखोपलब्धेरेवाभावो नापाद्यते । किन्तु केवलाया दुःखाद्यनुपलब्धिविशिष्टायाः सुखोपलब्धेरभावः । ततश्च सुखाद्यनुपलब्ध्यापादनेन दुःखाद्युपलब्धिरेवापादिता भवति । अतो न दोष इत्याह ॥ केवलं तदुपलब्ध्यभाव इत्यादिना ॥ समैवेति ॥ मध्यममनुष्याणां मिश्रत्वात्सुखस्य दुःखस्य चोपलब्धिः समैव स्यादित्यर्थः । एवं च सूत्रे सुराणां नित्यं सुखस्यैव असुराणां नित्यं दुःखस्यैव मनुष्याणां तु द्वयोरुपलब्धिरापाद्यते । सूत्रेऽनुपलब्धिशब्देन ' असुरा ' इत्यादाविव प्रकृतसुखोपलब्धिविरुद्धदुःखोपलब्धेरेव विवक्षितत्वात् । अन्यतरशब्देन द्वयोरपि विवक्षितत्वादिति द्रष्टव्यम् । एवं सुरा इति हृदयमिति ॥ श्रुतौ परमात्मशब्देनोत्तमजीवराशिर्वा ' परमात्मे 'त्यस्यानंतरं ' एवंसुरा 'इत्यध्याहारो वा विवक्षणीयः । नैवमसुरा इत्युत्तरवाक्येऽसुरजीवानां प्रतियोगित्वेनोक्तेः । भाष्योक्तस्मृतिसमाख्यानाच्चेति भावः ।

अन्येतु उत्क्रांतीत्यादिसूत्रनवकेन जीवस्याणुत्वे पूर्वपक्षिते ' तद्गुणे 'त्यादिसूत्रचतुष्टयेन महत्वं सिद्धांत्यत इत्याहुः । तन्न । सूत्रकृतावैराग्यपादे ' तदंतरप्रतिपत्ता 'वित्यादिसूत्रैर्जीवे तत्तत्कर्मफलानुभवाय देहांतरगतेः, ' यथेतमनेवं चे'त्यादिसूत्रैः सुकृतफलभोगाय धूमादिमार्गेण गतेः, ' संयमने त्वनुभूये'त्यादिसूत्रैः दुष्कृतफलभोगाय

संयमनीमार्गेण गतेः, अर्चिरादिपादे मोक्षायार्चिरादिमार्गेण गतेश्च तत्तदधिकरणोदाहृतानेकश्रुतिस्मृतितात्पर्यनिर्णायकन्यायैः सिद्धांतितत्वेनोत्क्रांत्यादिसूत्राणां पूर्वपक्षत्वोक्तेरतिसाहसत्वात्। नहि बुद्धिः कर्मफलभोगेन संसरति न वा मुच्यते। किञ्चोत्क्रांत्यादिसूत्राणां 'अणुर्ह्येष आत्मा' सोऽस्माच्छरीरादुत्क्रम्य यथा व्याप्यशरीराणि हरिचंदनविप्रुषः।' इत्यादिभाष्योदाहृतश्रुतिस्मृत्यनुगुणानां वक्ष्यमाणन्यायोपबृंहितानां शंकालिंगरहितानामुत्तरसूत्रेष्वनुक्तपरिहाराणां च कथं शंकासूत्रत्वम्। कथञ्च 'नाणुरतच्छ्रुतेरेति चे'दिति शंकालिंगसहितसूत्रोक्तस्योक्तश्रुत्यादिविरुद्धस्य च महत्त्वस्य सिद्धांतत्वम्। न ह्यत्रोत्तरसूत्रेषु परिहार उक्तः। किन्तु त्वयैव सूत्रव्याख्याव्याजेन सूत्राणि दूषितानि। दृश्यते हि जैमिनिसूत्रेषु 'शास्त्रदृष्टविरोधाच्च। अन्यानर्थक्या'दित्यादिसूत्रैरर्थवादाप्रामाण्ये पूर्वपक्षिते 'दूरभूयस्त्वात्। आकालिकेप्सा। सर्वत्वमाधिकारिकम्' इत्यादिसूत्रैर्दृष्टविरोधशास्त्रविरोधान्यानर्थक्यादीनां क्रमेण परिहारः। तथा 'तदर्थशास्त्रात्। अर्थविप्रतिषेधा'दित्यादिसूत्रैर्मंत्राप्रामाण्ये पूर्वपक्षिते 'गुणार्थेन पुनः श्रुतिः। परिसंख्या। अर्थवादोवे'ति त्रिभिस्सूत्रैः तदर्थशास्त्रवैयर्थस्य त्रेधा परिहारः। 'गुणादविप्रतिषेध' इत्यादिना अर्थविप्रतिषेधस्य च परिहारः।

तथा व्याकरणेपि 'लुपियुक्तवद्व्यक्तिवचने' इत्यादिना मतांतरमुक्त्वा 'तदशिष्यं संज्ञाप्रमाणत्वादित्यादिना परिहारः। तथा गौतमसूत्रेषु 'तदप्रामाण्यमनृतव्याघातपुनरुक्तिदोषेभ्य' इत्यादि सूत्रैर्वेदाप्रामाण्ये पूर्वपक्षिते 'न कर्मकर्तृसाधनवैगुण्यात्। अभ्युपेतकालभेदे दोषवचनात्। अनुवादोपपत्तेश्चे'त्यादिसिद्धांतसूत्रैः क्रमेण दोषत्रयपरिहारः। किं चेह किं जीवशब्देनानवच्छिन्नं शुद्धं ब्रह्म लक्ष्यते किंवा अंतःकरणेनाविद्यया वावच्छिन्नस्तत्प्रतिबिंबितो वा विशिष्टो जीव उच्यते। नाद्यः। त्वया 'चराचरेतिसूत्रात्प्राग्ब्रह्मविचारः। तदारभ्यापादसमाप्ति जीवविचार' इत्युक्तत्वेनेह ब्रह्मविचारस्यासंगतेः। शुद्ध उत्क्रांत्यादिश्रुतेरभावेनाणुत्वश्रुतेश्च 'व्योमव'दित्यादौ गतेरुक्तत्वेन पूर्वपक्षस्यानुदयाच्च। पूर्वपक्षे

'जीवे महत्त्वश्रुतिर्ब्रह्माभेदाभिप्राये'ति भाषणस्य, सिद्धान्ते 'सौत्र-मुत्क्रांत्यादिकं बुद्ध्युपाधिक'मिति भाषणस्य, सिद्धांतसूत्रे 'प्राज्ञव'दिति ब्रह्मणो दृष्टांतीकरणस्य चायोगाच्च । नांत्यः । विशिष्टे परिच्छिन्नाविद्यादि-नावच्छिन्ने महत्त्वायोगात् । मध्यमपरिमाणत्वे चानित्यत्यत्वापातात् । [यच्चोक्तं उत्क्रांतिर्यद्यप्यचलतोऽपि देहस्वाम्यनिवृत्त्या युक्ता । उत्तरे गत्यागती तु स्वात्मनैव । न ह्यचलतोगत्यादीति स्वात्मनेति सूत्रार्थ इति । तन्न । उत्क्रांतेरपि गत्यादिवत्क्रियात्वेनाऽविशेषात् । न हि देहानभिमानी सुप्तो संप्रज्ञातसमाधिस्थो वोत्क्रांत इत्युच्यते । सूत्रे आत्मना चोत्तरे इति निर्देशापत्तेश्च । मम तु षष्ठी उत्क्रांतिसूत्रेऽवश्यं विवक्षणीयस्य सका-शादित्यस्येहानुषक्तस्यान्वयाय । ब्रह्मणि स्वात्मशब्दोपि विषयवाक्यानु-करणाय । यच्चोक्तं 'सत्यं ज्ञानमनंतं ब्रह्म । स वा एष महानजआत्मे'ति महत्त्वश्रुतेर्नाणुर्जीव इति चेन्न । तत्र ब्रह्मण एवाधिकारादिति 'नाणु-'रिति सूत्रार्थ इति । तन्न । सत्यादिवाक्ये जीवविषयत्वशंकाबीजाभावात् । स वा इत्यत्र तु त्वन्मते जीवस्यैवाधिकृतत्वात् । अत एव त्वया 'स वेति श्रुतिर्जीवब्रह्माभेदाभिप्राये'ति भाषितम् । यच्चोक्तं एषोऽणुरात्मा चेतसा वेदितव्य' इति साक्षादेवाणुत्ववाचिशब्दात् 'बालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीव' इत्युन्मानाच्चाणुर्जीव इति 'स्वशब्दे'ति सूत्रार्थ इति तन्न । अणुत्वसाधकत्वेऽस्योत्क्रांतिसूत्रानंतर्यापातात् । द्युभ्वादिसूत्र इवात्रापि स्वशब्दपदेनात्मशब्दस्यैव ग्राह्यत्वाच्च । बालाग्रशत-भागत्वस्योन्मानशब्दार्थत्वायोगाच्च ।] यच्च 'चन्दनव'दित्यस्य दूषणमुक्तं युक्ता चन्दनबिन्दोस्सांशत्वादंशैर्देहव्याप्तिः । जीवस्तु निरंश इति । तन्न । जीवस्सांश इति 'व्यतिरेक' इति सूत्र एवोक्तत्वात् । यच्च 'आलोकव-'दित्यस्य दूषणमुक्तं आलोको न गुणः । निबिडावयवं हि तेजो द्रव्यं प्रदीपः । विरलावयवं तु प्रभेति । तन्न । टीकायामेव प्रभाया द्वेधा गुणत्व-निर्वाहात् । रत्नप्रभादावुक्तप्रकारायोगाच्च । अन्यत्रादृष्टत्वेपि शब्दादे-र्गुणस्याश्रयाग्रहणेपि ग्रहणवत्, संयोगादेरव्याप्यवर्तनवत्, जातिसम-वायादेर्धर्मितोऽन्यत्र वर्तनवत्, वह्न्यौष्ण्यस्य तत्समीपे वर्तनवच्च प्रभाया

गुणत्वेऽप्यन्यत्र वर्तनस्योपपत्तेश्च । [यच्चोक्तं 'व्यतिरेक' इति सूत्रं पूर्वाधिकरणशेषत्वेन दृष्टांतांतरमात्रपरमिति । तन्न । तथात्वे हि 'गुणाद्वे'तिवदत्रापि वाशब्दः स्यात् । तच्च 'गन्धव'दित्यस्य दूषणमुक्तं सहैवाश्रयद्रव्यावयवैर्गंधो व्यतिरिच्यत इति । तन्न । युगपत्सर्वतो योजनादिव्यापिगन्धोपलंभायानेकस्थूलावयवापसरणे सद्यो गुरुत्वादिह्रासस्या [स्य, द्रव्यक्षयस्य चा]पातात् । स्फटिककरंडांतःस्थकस्तूर्यादाववयवापसरणेऽवयवांतरानुप्रवेशकल्पने च मानाभावात् । प्रत्यभिज्ञाविरोधाच्च ।

'उपलभ्याप्सु गन्धं च केचिद्ब्रूयुरनैपुणाः ।
पृथिव्यामेव तं विद्यादपो वायुं च संश्रितम् ॥'

इति स्मृतिरपि पृथिवीगन्धस्य वाय्वादिनिष्ठत्वं निषेधति । न त्वाश्रयाद्व्यतिरेकम् । यच्चोक्तं ज्ञानादात्मान्य इति 'पृथ'गिति सूत्रार्थः बुद्धिगुणप्रधानत्वात्संसार्यात्मनो बुद्धिगुणेनाणुत्वोत्क्रांत्यादिनाणुत्वादिव्यपदेश इति 'तद्गुणेतिसूत्रार्थ' इति । तन्न । आनंदादितोन्यत्वमशंकित्वा ज्ञानादेवान्यत्वशंकाबीजाभावात् । मम रीत्या 'पृथ'गित्यत्र 'ज्ञोऽत' इत्यादौ प्रकृतस्य जीवस्य 'स्वात्मने'ति प्रकृतात्सजातीयादीश्वराद्भेदमुक्त्वा तद्गुणेत्यत्र श्रुत्यनुसारिसूत्राक्षरानुसारेण तत्त्वमसीति व्यपदेशस्य गतिकथनेनाविरोधाध्यायेऽवश्यवक्तव्यभेदाभेदश्रुत्यविरोधपरत्वसंभवे 'पृथ'गित्यस्य पूर्वपक्षत्वकल्पनायाश्चायोगाच्च । 'तमुत्क्रामंतं प्राणोनूत्क्रामती'ति श्रुतौ त्वद्रीत्या प्राणाख्यबुद्धिगतितः प्रागेव जीवगत्युक्त्या तस्या बुद्ध्युपाधिकत्वायोगाच्च । किञ्च किं बुद्धिगतेन गत्यादिना तदवच्छिन्नात्मनि गत्यादि जायते किं वा बुद्धिगतमेवारोप्यते उपचर्यते वा । नाद्यः । घटगत्या तदवच्छिन्ननभसि गत्यंतरादृष्टेः । अन्यथा यतो घटस्य बुद्धेर्वा गतिस्तत्राकाशस्यात्मनो वा सच्छिद्रत्वं यत्र गतिस्तत्र द्विगुणीकृत्य वृत्तिश्च स्यात् । न द्वितीयतृतीयौ । [ वैराग्यपादे 'यथेतमनेवं चे'त्यादिसूत्रैस्त्वद्रीत्यापि कर्मफलभोगाय धूमादिमार्गेण गत्यादिप्रतिपादकत्वेनार्चिरादिपादे च 'अर्चिरादिना तत्प्रथिते'रित्यादिसूत्रैर्ज्ञानफलभोगार्चिरादिमार्गेण गत्यादिप्रतिपादकत्वेन च निर्णीतानां] धूमादभ्रमभ्रादाकाशमाकाशाच्चन्द्रलोकं

अर्चिषोऽहरह्न आपूर्यमाणपक्ष'मित्यादिश्रुतीनां,

'धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् ।
तत्र चांद्रमसं ज्योतिर्योगी प्राप्य निवर्तते ॥
अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ।
तत्र प्रयाता गच्छंति ब्रह्म ब्रह्मविदो जनाः ॥'

इत्यादिस्मृतीनां चाबाधेप्यत्यन्ताप्रामाण्योपचरितार्थत्वयोरयोगात् । व्याप्तिश्रुतिस्तु ब्रह्मविषयत्वादबाधिकेति 'नेतराधिकारा'दिति सूत्र एवोक्तम् । नच व्यावहारिकस्य गत्यादेस्सत्त्वान्नात्यन्ताप्रामाण्यम् । अमूर्ते मूर्तावच्छिन्नेपि व्यावहारिकगत्यदृष्टेः । बुद्धिगतव्यावहारिकगत्युपाधिकस्यात्मगतगत्यादेर्व्यावहारिकत्वायोगाच्च । नहि घटोपाधिकं नभसः परिच्छिन्नत्वं महत्त्वमिव व्यावहारिकम् । नच व्यावहारिकत्वेपि धर्मिणा परमार्थसदात्मना समसत्ताभावमात्रेणौपाधिकत्वम् । धर्मिणोऽवच्छिन्नात्मनोप्यपरमार्थत्वात् । नच गत्यादिश्रुतिर्बुद्धिमात्रविषयत्वान्नोपचरितार्थेति युक्तम् ।

'नाकस्य पृष्ठे सुकृते तेऽनुभूत्वेमं लोकं हीनतरं वा विशंति ।
ते शुभमनुभूयावर्तंते पुनः कर्म कुर्वंति पुनर्गच्छंति ।'

इत्यादिश्रुतौ, 'गच्छंति पापिनः सर्वे नरकं नात्र संशयः । तत्र भुक्त्वा पतंत्येवेत्यादिस्मृतौ 'संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शना'दिति सूत्रे च गतेः सुखदुःखानुभवरूपसंसारसामानाधिकरण्योक्तेः । 'योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः । स्थाणुमन्येऽनुसंयंति । एष ह्येनं जीव(मभिजीव)यत्येष उद्गमयती'त्यादिश्रुतौ साक्षाज्जीवगतत्वोक्तेश्च । किञ्च गत्यादि शुद्धात्मनिष्ठमेव । 'तेन प्रद्योतेनैष आत्मा निष्क्रामती'ति श्रुतौ शुद्धात्मवाचकात्मशब्दात् 'स एनान्ब्रह्म गमयति । ब्रह्मविदाप्नोति-पर'मित्यादिश्रुतिषु, 'तत्र प्रयाता गच्छंति ब्रह्म ब्रह्मविदो जनाः । प्रविशंति परं पद'मित्यादिस्मृतिषु, मुक्तोपसृप्यव्यपदेशात् । परं जैमिनिर्मुख्यत्वा'दित्यादिसूत्रेषु च गन्तव्यस्य परब्रह्मतोक्तेः । 'तयोर्ध्वमायन्नमृतत्वमेती'तिश्रुतौ च गन्तुर्मुक्त्युक्तेः । 'मन उदक्रामन्मीलित इवाश्नपि-

बन्नास्तैवे'त्यादिश्रुतौ च मनस उत्क्रमणेप्यात्मनस्तदभावश्रवणात्। [ 'एतं प्राणमयमात्मानमुपसंक्रम्य । एतं मनोमयमात्मानमुपसंक्रम्य । इमाँल्लोकान्कामान्नीकामरूप्यनुसंचरन्। एतत्सामगायन्नास्ते' इत्यादिश्रुतौ च त्वद्रीत्या प्राणमयादित्यागानन्तरमपि संचरणश्रवणाच्च ।] 'तदा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्य'मिति श्रुतौ च नामरूपविमोक्षानन्तरं गत्युक्तेः। 'परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते। स तत्र पर्यैतीत्यादिश्रुतौ च स्वरूपाभिव्यक्त्यनन्तरं गत्युक्तेः। 'अणुर्ह्येष आत्मा। यं वा एते सिनीतः पुण्यं च पापं चे'त्यादिश्रुतौ चाणुत्वस्य शुद्धगतमुक्तिसामानाधिकरण्यबन्धसामानाधिकरण्योक्तेः। 'एषोऽणुरात्मा चेतसा वेदितव्य' इति श्रुतौ चाणुत्वस्य वेदितव्यत्वोक्तेः।] 'तद्यथा नस्सुसमाहितमुत्सर्जद्यायादेवमेवायं शारीर आत्मा प्राज्ञेनात्मनान्वारूढ उत्सर्जद्याती'त्यादिश्रुतौ च स्वाभाविकगत्याश्रयशकटादिदृष्टांतस्यैवोक्तेः। 'तद्यथा तृणजलूका तृणस्यांतं गत्वाऽन्यमाक्रममाक्रम्यात्मानमुपसंहरत्येवमेवायमात्मेदं शरीरं निहत्याविद्यां गमयित्वान्यमाक्रममाक्रम्यात्मानमुपसंहरती'ति श्रुतौ चाविद्यानिवृत्त्यनन्तरं गत्युक्तेः।

यच्चोक्तं 'बुद्धेर्गुणेनात्मगुणेन चैव ह्याराग्रमात्रोह्यपरोपि दृष्ट' इति श्रुतौ बुद्धिगुणेनाराग्रमात्रत्वगुणेन तु विभुत्वमुक्तमिति तन्न। 'यद्यथाणुनश्चक्षसः प्रकाशो व्यातत एवमेवास्य पुरुषस्य प्रकाशो व्याततोणुर्ह्येवैष पुरुषो भवती'ति श्रुतिं 'चिद्गुणेनैव नान्यथे'ति स्मृतिं चानुसृत्य बुद्धेर्ज्ञानस्य गुणे न व्याप्तः अपरः आत्मगुणेन चाराग्रमात्र इत्यन्वयात्। पाठक्रमादर्थक्रमस्य बलीयस्त्वात्। त्वन्मत आत्मनो निर्गुणत्वाच्च। यच्चोक्तं 'सचानन्त्याय कल्पत' इत्युत्तरवाक्ये स्वाभाविकानंत्योक्तेः पूर्वोक्तं बालाग्रशतभागत्वमौपाधिकमिति तन्न। [आनंत्यशब्दस्य मरणादिरूपनाशाभावात्मकमोक्षपरत्वात्। अन्यथानंतत्वस्य साध्यत्वोक्त्ययोगात्] चतुर्थीनिर्दिष्टस्यानंत्यस्य पुनरावृत्तिरहितमोक्षरूपफलत्वात्। यच्चोक्तं 'कस्मिन्न्वहमुत्क्रांत उत्क्रांतो भविष्यामि कस्मिन्वाव प्रतिष्ठिते प्रतिष्ठास्यामीति। स प्राणमसृजते'तिश्रुतेर्जीवस्योत्क्रांत्यादिप्राणोत्क्रांत्याद्युपाधिक-

मिति तन्न। अस्य सृष्टिवाक्यस्य ब्रह्मविषयत्वात्। वत्से धावति गौर्धावति इत्यादाविवात्रापि ब्रह्मणि प्राणोत्क्रमणादन्यस्यैवोत्क्रमणस्य श्रुतेश्च। परमात्मनोपि रूपविशेषेणोत्क्रमणस्य 'प्राज्ञेनात्मने'त्यादिश्रुतिसिद्धत्वाच्च। विस्तरस्तु न्यायामृते जीवाणुत्ववादे द्रष्टव्यः। यच्चोक्तं बुद्धेर्यावत्संसार्यात्मभावित्वात्सुषुप्तौ विद्यमानाया एव पुंस्त्वादिवदभिव्यक्तत्वाच्च तस्या उत्क्रांत्यादावुपाधित्वं युक्तमिति 'याव'दिति 'पुंस्त्वे'ति च सूत्रयोरर्थ इति तन्न।

त्वयैवाविद्याया एव जीवोपाधित्वार्थं सुषुप्तावहमर्थाभावार्थं च तदा बुद्ध्यभावस्य साधितत्वात्। यच्चोक्तं नच मन एव नास्तीति शंक्यम्। तथात्वे बाह्येंद्रियसंप्रयोगादिसामग्रीदशायां मनोवधानानवधानाभ्यामुपलब्ध्यनुपलब्धी इति व्यवस्थित्यसंभवेन तद्दशायां नित्यमुपलब्धिरनुपलब्धिर्वा स्यादित्यतिप्रसंगनिरासाय मनसोंगीकार्यत्वादिति 'नित्योपलब्ध्यनुपलब्धी'त्यादिसूत्रार्थ इति तन्न। अतींद्रियचक्षुरादेरसत्त्वमशंकित्वा साक्षिसिद्धमनस एवासत्त्वशंकाबीजाभावात्। सौत्रनित्यशब्दास्वारस्यात्। सौत्रान्यथाशब्दस्य 'पुंस्त्वादिव'दिति पूर्वसूत्रोक्तावरणविरहवाचिताया एवोचितत्वाच्च। उक्तरीत्या मनःसिद्धावपि त्वन्मते तार्किकमत इवाणुत्वाभावेन युगपदनेकेंद्रियसंबंधसंभवेन तद्दशायां नित्योपलब्धिप्रसंगाच्च। यदि चानेकेंद्रियसंबंधे सत्यपि मनस्येवावधानाख्यः कश्चिद्विशेषः कल्प्यते तर्हि क्लृप्त आत्मनि बाह्येंद्रिये वा स कल्प्यताम्।

केचित्तु 'ज्ञोऽत'इत्यादि'नित्योपलब्धी'त्यंतानि चतुर्दशसूत्राण्येकमधिकरणम्। तत्र जीवस्य ज्ञातृत्वं स्वाभाविकम्। नतु तार्किकमत इवागंतुकम्। नापि सौगतमत इव ज्ञानस्वभावत्वमिति 'ज्ञोऽत'इति सूत्रार्थः। 'उत्क्रांती'त्यादीनि तु तदुपयोगित्वेनाणुत्वं जीवस्य प्रतिपादयन्ति सिद्धान्तसूत्राण्येव। ज्ञातृस्वभावस्य सर्वगतत्वे हि सर्वं तत्संबंधात्सदा ज्ञायेत। 'स्वात्मने'ति सूत्रस्य तु उत्क्रांतिर्यद्यप्यचलतोपि देहस्वाम्यनिवृत्त्या युक्ता। उत्तरे गत्यागती तु स्वात्मनैव।

न ह्यचलतो गत्यागती इत्यर्थः । स्वशब्दे'ति सूत्रस्य तु 'एषोऽणुरात्मे'ति साक्षादेवाणुत्ववाचिशब्दात् बालाग्रशतभागस्येत्युन्मानाच्चाणुर्जीव इत्यर्थः । 'व्यतिरेक' इति सूत्रस्य तु पृथ्वी गंधवतीतिवत् 'जानात्येवायं पुरुष'इति श्रुतौ ज्ञानात्मनोरेकस्मिन् पदे प्रकृतिप्रत्ययाभ्यां विशेषणविशेष्यत्वनिर्देशाद्भेद इत्यर्थः । 'पृथ'गिति सूत्रस्य तु 'नहि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यत' इति श्रुतौ पदद्वयेन विशेषणविशेष्यत्वेन निर्देशाद्भेद इत्यर्थः । 'तद्गुणे'त्यादिसूत्रयोस्तु आत्मनो ज्ञानगुणसारत्वाज्ज्ञानस्य यावदात्मभावित्वाच्च ज्ञातर्यात्मनि श्रुतिषु ज्ञानत्वव्यपदेश इत्यर्थः । 'पुंस्त्वे'ति सूत्रस्य तु सुप्त्यादौ सतोप्यनभिव्यक्तस्य ज्ञानस्य जागरणादावभिव्यक्तेर्यावदात्मभावित्वसिद्धिरित्यर्थ इत्याहुः । तन्न । 'स्वरूपाण्येव जीवस्य विज्ञानघन एवे'त्यादिश्रुत्या 'ज्ञानस्वरूपमत्यंतनिर्मलं परमार्थत' इत्यादिस्मृत्या च विरुद्धत्वेन ज्ञानस्वभावत्वनिरासायोगात् । ज्ञातृस्वभावस्यात्मनोणुत्वपक्षे तत्संबद्धस्य विभोराकाशेश्वरादेर्नित्यमप्रकाशवद्विभुत्वपक्षेपि तत्संबद्धस्याप्रकाशोपपत्त्याऽणुत्वस्य ज्ञातृस्वभावत्वेऽनुपयोगाच्च । आनंदादेः स्वभाविकत्वमनुक्त्वा ज्ञानस्यैव तदुक्तौ विशेषहेत्वभावाच्च । 'स्वात्मने'ति सूत्र उत्तरे इति प्रथमानिर्देशापत्तेश्च । मम तु षष्ठी उत्क्रांतिसूत्रेऽवश्यविवक्षणीयस्य सकाशादित्यस्येहानुषक्तस्यान्वयाय । 'स्वशब्दे'ति सूत्रस्य त्वणुत्वसाधकत्व उत्क्रांतिसूत्रानंतर्यापाताच्च । उन्मानशब्दस्य बालाग्रशतभागशतभागत्वे योगरूढ्योरभावाच्च । 'व्यतिरेक' इति सूत्रस्य जीवाणुत्वे योगिनोऽनेकशरीरस्थित्ययोग इति दृढतरबाधकपरिहारार्थताया एवौचित्येन भेददृष्टांतांतरपरत्वायोगाच्च । रूपादेरपि दृष्टांतत्वसंभवेन विशिष्य गंधग्रहणायोगाच्च । भेदमात्रपरत्वे 'व्यतिरेक' इति सूत्रेणैव वा 'पृथ'गिति सूत्रेणैव वा 'विज्ञानं त्वेव विजिज्ञासितव्यम् । अथात आत्मादेश' इति वाक्यद्वयरूपस्येवैकपदरूपस्य पदद्वयरूपस्य च भेदोपदेशस्य ग्रहणसंभवेन सूत्रद्वयवैयर्थ्याच्च । अघटं भूतलमित्यादौ विशेषणविशेष्यभावेपि त्वत्पक्षे भेदाभावाच्च ।

गंधादेः कस्तूर्यादिसारत्वेपि यावद्द्रव्यभावित्वेपि तत्र गंधादिशब्दस्य मुख्यत्वाभावाच्च। एतावंतं कालं सुखमहमस्वाप्समिति परामर्शदर्शनेन सुप्त्यादौ जागरण इवात्मादिज्ञानस्याभिव्यक्तत्वेनेंद्रियाणां घटादिविषयसंबंधस्य च तदा स्वरूपेणैवाभावेनानभिव्यक्त्युक्त्ययोगाच्च।

॥ इति पुंस्त्वाधिकरणम् ॥ १६ ॥

---

## अथ कर्तृत्वाधिकरणम्

## ॥ ॐ कर्ता शास्त्रार्थवत्त्वात् ॐ ॥

अस्त्वानंदादीनां सतामेवाभिव्यक्तिः। कर्तृत्वस्य तु न। तस्य कदाप्यभावादिति पूर्वपक्षोत्थानात्संगतिः। अत्र जीवस्य कर्तृत्वश्रुतिः किं हिताकरणादियुक्त्यनुगृहीतया तदकर्तृत्वश्रुत्या बाधितोत नेति चिन्ता। [अत्र श्रुतिसमन्वयेनोक्तं ब्रह्मणः स्रष्टृत्वादिकमयुक्तं नवेति चिन्ता। तदर्थं श्रुतिरप्रमाणं नवेति। तदर्थं जीवस्य कर्तृत्वश्रुतिः किं हिताकरणादियुक्त्यनुगृहीतया तदकर्तृत्वश्रुत्या बाधितोत नेति।] तदर्थमकर्तृत्वश्रुतिः किं कर्तृत्वमात्रनिषेधपरोत स्वतन्त्रकर्तृत्वनिषेधपरेति। तदर्थं जीवस्येश्वरवत्स्वतन्त्रकर्तृत्वाभावेपि परतन्त्रकर्तृत्वमात्रेण विध्यादिविषयत्वमयुक्तमुत नेति। न कर्तेति पूर्वपक्ष इति ॥

अयं भावः। जीवस्य कर्तृत्वं किं स्वतन्त्रमुत परतन्त्रम्। नाद्यः। श्रुत्यादिविरोधात्। हिताकरणादिदोषप्रसक्तेश्च। द्वितीयेपि पारतन्त्र्यं किं कर्तृत्वशक्तेः स्वायत्तत्वेपि तक्षणः प्रासादादिकारयितृपुमधीनत्ववदीश्वराधीनत्वमात्रं किं वा दारुयोषावदीश्वराधीनचेष्टाकत्वम्। नाद्यः। 'य आत्मानमन्तरो यमयती'त्यादिश्रुतिविरोधात्। अंत्ये दारुयोषावदेव न जीवो विधिनिषेधविषयः स्यादिति। न्यायविवरणोक्तां पूर्वपक्षयुक्तिमाह। कल्पनालाघवं चेति। सिद्धान्तयदिति।

अयं भावः सूत्रोक्तरीत्या युक्तिप्रत्यक्षश्रुतिभिर्जीवः कर्तैव। नच 'नान्यः कर्ते'त्यादिश्रुत्या 'इतरव्यपदेशा'दिति पूर्वोक्त्या च विरोधः।

तत्र जीवे स्वतन्त्रकर्तृत्वनिषेधात् । इह चास्वतन्त्रकर्तृत्वोक्तेः । परतन्त्रकर्तृत्वेपि जीवस्य विध्याद्यविषयत्वं न तावत्पुरुषेण नर्त्यमानदारुयोषावज्जडत्वात् । नापि चेतनत्वेपि मत्तस्य मदेनेव दुर्बलस्य प्रबलजलौघादिनेवेश्वरेण बलान्नोद्यमानत्वात् । ईश्वरस्य जीवगतेच्छाद्युत्पाद्यैव प्रवर्तकत्वात् । नापि जीवस्य कर्तृत्वेपि ईश्वरस्यापि कर्तृत्वात् । रथाकर्षणादौ सत्रादौ चान्यस्य कर्तृत्वेपि स्वस्य कर्तृत्वमात्रेण विध्यादिदर्शनात् । नापि विग्रिगृहीतस्येव स्वेच्छाधीनप्रवृत्त्याद्यभावात् । जीवप्रवृत्त्यादेरीशेच्छाधीनत्वेपि जीवेच्छाजन्यत्वस्यानुभवात् । नापि स्वेच्छामात्राधीनप्रवृत्त्याद्यभावात् । सर्वत्रापि प्रवृत्त्यादेरदृष्टादिजन्यत्वेन तस्य विध्याद्यविषयत्वातन्त्रत्वात् । नापि जीवेच्छादेरपीशेच्छोत्पादितत्वात् । पित्राद्युत्पादितेच्छादिमतोपि माणवकस्य संध्योपासनादिविध्यादिदर्शनात् । नापि कर्तृत्वशक्तेरीशाधीनत्वात् । अन्वयव्यतिरेकाभ्यामीशाधीनाया एव तस्या विध्यादिविषयत्वे तन्त्रत्वात् । क्वेदमुपलब्धमङ्गभवता ईशाधीनैव सा तत्र हेतुर्नतु तदधीनेति । नापि विध्यादिविषयस्य जीवकृत्यसाध्यत्वात् । असिद्धेः । दृश्यते हि यागादेस्तत्कृतिसाध्यत्वम् । अस्ति हि जीवस्यापीश्वरदत्तं जडं प्रति स्वातन्त्र्यम् । उक्तं हि 'स्वातन्त्र्यं हि जडान् प्रती'ति । परंतु सा कृतिरदृष्टादिनेवेशेनापि जायते। नापि क्वचिदीश्वरेण जीवकृतिविघ्नात् । ईश्वरः पुण्यपापादावुदासीन इति पक्षे द्वितीयादिप्रवृत्तावनुमन्तृत्वेपि प्रथमप्रवृत्तावुदासीन इति पक्षेपीश्वरेण अनीश्वरपक्षेप्यदृष्टादिना अदृष्टाभावपक्षेपि दृष्टहेत्वंतरेण पाकादिकृतिविघातदर्शनेन कस्यापि कुत्रापि नियोगानुपपत्तेः । तस्माज्जीवेपि विध्यविषयेभ्य ईशजडमुक्तेभ्यो व्यावृत्तस्य संबधितया विधिज्ञानस्य तज्जन्यायाः फले तत्साधनेचेच्छायास्साधनविषयककृतेश्चानुभवसिद्धत्वात्तस्य च ज्ञानादेः 'न ऋते त्व' दित्यादिश्रुतिभिरीश्वराधीनत्वेप्यस्वतन्त्रकर्तृत्वमात्रेण विधिविषयत्वं कर्मफलभाक्त्वं च युक्तम् । एतदेवाभिप्रेत्योक्तं भगवत्पादैर्गीताभाष्ये 'अकर्तृत्वेपि विधिद्वारेश्वरप्रसादादिच्छोत्पत्त्योक्तकारणैः कर्मद्वारा पुरुषार्थो भवतीति न प्रवृत्तिविधिवैयर्थ्य'मिति । भारततात्पर्यनिर्णयेपि—

'प्रत्यक्षैषा कर्तृता जीवसंस्था तथागमादनुमानाच्च सर्वम् ।
विष्णोर्वशे तत्र हेयं द्वयं च जानन्विद्वान्कुरुते कार्यकर्म ॥' इति।

पुण्यपापादिजनकक्रियाविषयजीवगतेच्छाप्रयत्नादौ सर्वत्रेश्वरस्य प्रयोजककर्तृत्वेपि जीवनिग्रहानुग्रहयोरीश्वरस्यानादिसिद्धजीवगतयोग्यतापेक्षत्वान्न वैषम्यादीत्युक्तं वैषम्याधिकरणे । कर्माद्यनपेक्ष्य फलदाने शक्तस्यापीश्वरस्य तदपेक्ष्यैव फलं दास्यामीति स्वसंकल्पादेव तदपेक्षेति न स्वातन्त्र्यहानिः। उक्तं हि—'एतानपेक्ष्यैव फलं ददानीत्यस्यैव संकल्प इति स्वतन्त्रे'ति ॥ अयं पर इति ॥ 'परात्तु तच्छ्रुते'रिति सूत्रात् पर इत्यनुषज्यत इति भावः ॥ विधिनिषेधशास्त्रावैयर्थ्यायैवेति ॥ न त्वशक्तस्य स्वस्य साहाय्यार्थमित्यर्थः ।

अन्येतु 'कर्ते'त्यादिसूत्रसप्तकमेकमधिकरणम् । तत्र च सांख्यरीत्या बुद्धेः कर्तृतेति प्राप्ते जीवस्येति सिद्धांतः । 'यथा च तक्षे'ति सूत्रमधिकरणांतरम् । तत्र च जीवस्य कर्तृत्वमग्नेरौष्ण्यमिव स्वाभाविकमिति प्राप्ते तक्ष्णः कर्तृत्वं वास्याद्युपाधिनेवांतःकरणाद्युपाधिना कल्पितमिति सिद्धांतः । 'परात्त्वि'त्यादिसूत्रद्वयमधिकरणांतरम् । तत्र च जीवस्योक्तं कर्तृत्वमीश्वरानपेक्षमिति प्राप्ते तत्सापेक्षमिति सिद्धांत इत्याहुः । तन्न। जीवकर्तृत्वाकर्तृत्वश्रुत्योर्विरोधस्य भोक्तृत्वाभोक्तृत्वश्रुत्योरिव त्वदुक्तेन 'तद्गुणसारत्वा'दिति न्यायेनैवौपाधिकानौपाधिकविषयतया निरासेनैतदधिकरणस्य वैयर्थ्यात् । सांख्यस्मृतिविरोधस्य चाद्यपादे निरासादिहासंगतेश्च ।

यच्चोक्तमुभाभ्यां, कर्ता । 'विज्ञानात्मापुरुष' इत्यादेः कर्तृत्वप्रतिपादकस्य 'यजेते'त्यादिविधिनिषेधरूपस्य च शास्त्रस्यार्थवत्त्वात् । 'स्वे शरीरे यथाकामं परिवर्तते' इति विहारोपदेशात् । 'प्राणान्गृहीत्वे'त्युपादानात् । 'विज्ञानं यज्ञं तनुत' इति क्रियायां कर्तृत्वेन व्यपदेशाच्च जीवः कर्ता । अत्र च विज्ञानशब्दस्य बुद्धिपरत्वे 'तदेतेषां प्राणानां विज्ञानेने'ति श्रुत्यंतर इव कर्तृत्वविपरीतकरणत्वेन निर्देशः स्यादिति 'कर्ते'त्यादि सूत्रचतुष्टयार्थ इति । तन्न । आद्यसूत्रस्थशास्त्रशब्देनैव 'यत्कर्म कुरुते

तदभिसंपद्यते। साधुकारी साधुर्भवती'त्यादेरिव 'यथाकाम'मित्यादेरपि कर्तृत्वप्रतिपादकशास्त्रस्य ग्रहणसंभवेन द्वितीयादिसूत्रत्रयवैयर्थ्यात् । बुद्धेः कर्तृत्ववादिनं प्रति श्रुत्यन्तरे करणत्वोक्तिविरोधस्यैव वक्तव्यत्वेन 'विज्ञान'मिति श्रुतौ बुद्ध्युक्तौ कर्तृत्वविपरीतकरणत्वोक्तिः स्यादित्यापादनस्यासंगतेश्च । यच्चोक्तं परैः जीवः कर्ता चेन्नियमेन सुखीस्यादित्यादिशंकानिरासार्थं 'उपलब्धी'ति सूत्रमिति तन्न । क्रियावेशमात्रस्य नियतसुखाप्रसंजकत्वात् । तत्प्रसंजकस्य च स्वातन्त्र्यस्याभावेपि सांख्यानभिमतक्रियावेशानुरोधेन शंकानुदयात् । यच्चोक्तं करणशक्तियुक्ताया बुद्धेः कर्तृत्वे करणकारकशक्तिविपरीताकर्तृकारकशक्तिः स्यादिति 'शक्ती'ति सूत्रार्थ इति तन्न । [कारकशक्तिवाचिविभक्तिविपर्ययापादकेन 'न चेन्निर्देशे'त्यनेनास्यार्थिकपुनरुक्तेः] । सांख्यमते बुद्धेः कर्तृत्वेपि तत्वांतरस्य मनसः करणत्वसंभवेनेष्टापत्तेः ।

यच्चोक्तं जीवस्याकर्तृत्वे निदिध्यासनादिरूपसमाधेरप्यभावः स्यादिति 'समाधी'ति सूत्रार्थ इति तन्न । यागादिविधिशास्त्रस्येव समाधिविधिशास्त्रस्याप्याद्यसूत्रस्थशास्त्रशब्देनैव ग्रहणसंभवेनास्य वैयर्थ्यात् । यदि च समाधिदशायां कर्तृभूतबुद्ध्यविवेककृतस्य कर्तृत्वस्यायोग इतीहाभिप्रायस्तर्हि सिद्धांत्यभिप्रेतस्यारोपितकर्तृत्वस्याप्ययोगः । किञ्च त्वन्मते 'शक्तिविपर्यया'दित्यस्य 'समाध्यभावा'दित्यस्य च प्रसंगरूपहेतुता कल्प्या । 'यथे'तिसूत्रस्याधिकरणांतरत्वमप्ययुक्तम् । उक्तार्थे दृष्टांतांतरमात्रार्पकेण यथाशब्देन, चशब्देन च पूर्वशेषत्वप्रतीतेः । कल्पितत्वे स्फटिकलौहित्यस्यैव दृष्टांतयितव्यत्वेन तक्षकर्तृत्वस्य तदयोगाच्च । नहि कार्योत्पादने सहकार्यपेक्षामात्रेण कर्तृकरणादेः कर्त्रादित्वं कल्पितं भवति। यदि च तक्षण इव जीवस्य शक्तेः स्वाभविकत्वेपि कार्यनिष्पादकत्वं सहकार्यधीनत्वादागंतुकमिति विवक्षा तदेष्टापत्तिः। किञ्च कर्तृत्वस्य 'तन्मनोकुरुते'त्यादौ मनसः कृतिकर्मत्वश्रवणात् तथा 'मन उदक्रामत् । मीलित इवाश्नन् पिबन्नास्तैवे'त्यादौ मनस उत्क्रमणेप्यात्मनः कर्तृत्वश्रुतेः । तथा 'एतं प्राणमयमात्मानमुपसंक्रम्य । एतं

मनोमयमात्मानमुपसंक्रम्य । इमाँल्लोकान् कामान्नीकामरूप्यनुसंचरन्नि'त्यादौ त्वद्रीत्या प्राणमयादित्यागेपि संचरणकर्तृत्वश्रवणात् तथा 'स यदा मनसा मनस्यति। यन्मनसा न मनुते। यच्चक्षुषा न पश्यति। मनसा वा अग्रे संकल्पयति। अथ वाचा व्याहरती'त्यादिश्रुतौ 'शरीरवाङ्मनोभिर्यत्कर्म प्रारभते नर' इत्यादिस्मृतौ च मनसः करणत्वोक्तेः तथा मनसोंतःकरणत्वप्रसिद्धेः। तथा सुप्तौ त्वद्रीत्या बुद्धेरभावेप्युच्छ्वासादिकर्तृतायाः प्रत्यक्षेण 'सुप्तो भूर्भूरित्येव प्रश्वसितीत्यादिश्रुत्या च सिद्धेः। तथा विहारेतिसूत्रीयभाष्योदाहृतया 'परंज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते। स तत्र पर्येति जक्षन्क्रीडन् रममाण' इत्यादिश्रुत्या स्वरूपाविर्भावरूपपरममुक्तावपि कर्तृत्वोक्तेर्न मनसः कर्तृकोटिता। [किञ्च विशिष्टस्य कर्तृत्वे मोक्षसाधनविधिरयुक्तः स्यात्। कर्तुरिष्टसाधनत्वस्य विधिबोध्यत्वात्। न चाहं करोमीति प्रत्यक्षेण तथा 'शास्त्रफलं प्रयोक्तु'रितिन्यायानुगृहीतेन मोक्षसाधनविषया कृतिर्मोक्षसामानाधिकरणा। तत्साधनविषयकृतित्वात्। संमतवदित्यनुमानेन तथा 'कर्ता विज्ञानात्मा पुरुषः। तत्कर्म कुरुते तदभिसंपद्यत'इत्यादिश्रुतिभिः तथा मोक्षसमानाधिकरणविधिनिषेधाद्यतिक्रमजन्यपापादिलेपयोग्यं, चेतनत्वेन शासनयोग्यं च जीवमधिकृत्य कर्तव्यनिषिद्धार्पकविधिनिषेधशास्त्रवैयर्थ्यान्यथानुपपत्त्या च सिद्ध आत्मनः कर्तृत्वे बाधकमस्ति। येन तन्मिथ्या स्यात्। 'आत्मेंद्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिण' इति श्रुतिस्त्वात्मनो भोक्तृत्वे देहादेरिव मनसः सहकारित्वमाह। नतु मनसो भोक्तृकोटिताम्।]

'अहंकारविमूढात्मा कर्ताहमिति मन्यते'

इतिस्मृतिरपि जीवस्य स्वातंत्र्यनिषेधपरा।

तत्रैवं सति कर्तारमत्मानं केवलं तु यः।

पश्यत्यकृतबुद्धित्वान्न स पश्यती'त्यादितद्वाक्यात्।

'ध्यायतीव लेलायतीवे'त्यादिश्रुताविवशब्दोप्यस्वातंत्र्यात्। [कृत्याश्रयत्वे चाज्ञानाश्रयत्वमिव न द्रव्यांतरापत्तिरूपविकारापादकम्।

नच जीवकर्तृत्वस्य प्रत्यक्षप्राप्तत्वादपुरुषार्थत्वाच्च न तत्र श्रुतेस्तात्पर्यमिति युक्तम् । ईश्वरकर्तृत्वस्याप्राप्तत्वेन तच्छ्रुतेस्तत्परत्वस्य दुर्वारत्वात् । कर्तृत्वस्याहंकरोमीति विशिष्टात्मनि प्राप्तावपि शुद्धेऽप्राप्त्या श्रुतेस्तत्परत्वोपपत्तेश्च । अन्यथा सत्यज्ञानादिवाक्यमपि सन्घटोऽहमस्मीत्यादि प्रत्यक्षप्राप्तविशिष्टात्मसत्यतानुवादि स्यात् । किञ्च यत्र प्रमाणेन निषेद्धुमनुवादस्तत्रानुवाद्यस्य सत्त्वाभावेपि यत्रान्यद्विधातुं सः तत्र तस्य सत्त्वमेव । अन्यथानुवाद्यस्यासत्त्वे आश्रयासिद्धौ धर्मधर्मिसंसर्गरूपानुमितिविषय इवानुवाद्यविधेयसंसर्गरूपवाक्यार्थो बाधितः स्यात् । नहि 'रूप्यंदक्षिणा न सुरां पिबे'दित्यादिशास्त्रेष्वारोपितरूप्यादेर्धीः । कर्तृत्वस्य क्लेशसंबंधे चाशक्यविषयत्वं तंत्रम् । लीलादिकरणेन क्लेशादृष्टेः । लीलादेरुत्सवादेर्विहितकर्मणश्चाकरणेनैव तद्दृष्टेश्च । 'यदा वै करोत्यथ निस्तिष्ठति । नाकृत्वा निस्तिष्ठति । कृत्वेव निस्तिष्ठति । नासुखं लब्ध्वा करोति । सुखमेव लब्ध्वा करोती'त्यादिश्रुतेश्च । 'नहि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत्' इत्यादिस्मृतेश्च । अन्यथा सुखज्ञानयोरपि क्लेशाविनाभावादात्मा तद्रूपो न स्यात् । यथा च सुप्तौ क्लेशाभावेपि ज्ञानादि तथा कृतिरपीत्युक्तम् ] किञ्च 'कर्ते'ति पूर्वाधिकरणे बुद्धेरेव कर्तृत्वमात्मनस्तु तदविवेकादारोपितमिति सांख्यमतनिषेधेनात्मनः कर्तृत्वं समर्थ्येह 'यथा च तक्षे'त्यधिकरणे पुनर्बुद्धिगतमेवारोप्यत इति सिद्धांतोक्तौ पूर्वाधिकरण पूर्वपक्ष एवेह सिद्धांतः स्यादिति महदिदं व्याख्यानकौशलम् । सांख्याभिमताख्यातिनिरासस्त्विदंरूप्यमिति प्रसिद्धस्थले तन्निरासं विना न सिध्यतीति तत्रैव निरस्यम् । न त्विह । किञ्च त्वन्मते जीवेऽणुत्वोत्क्रांत्यादिकं यथा बुद्ध्युपाधिकं मिथ्या तथा कर्तृत्वमपि । एवंचोत्क्रांत्यधिकरणेऽणुत्वादेः पूर्वपक्षत्वं 'कर्ते'त्यधिकरणे तु कर्तृत्वस्य सिद्धांतत्वमिति विभागः किं कृतः । यथोत्क्रांत्यधिकरणे 'उत्क्रांती'त्यादिसूत्राष्टकेन पूर्वपक्षयित्वा 'तद्गुणसारत्वा'दित्यनेन सिद्धांतितमेवं 'कर्ते'त्यधिकरणेपि सूत्रसप्तकेन पूर्वपक्षयित्वा 'यथा च तक्षे'त्यनेन सिद्धांतितमिति कस्मान्न भाष्यते ।

'परात्वि'त्याधिकरणमप्ययुक्तम् । जीवेंतःकरणसन्निधानादारोपितस्याविद्यककर्तृत्वस्य रूप्यादेरिवेश्वरानपेक्षत्वात् । यच्चोक्तं 'कृतप्रयत्नापेक्ष' इत्यस्य जीवकृतो यः प्रयत्नो धर्माधर्मलक्षणस्तदपेक्ष' ईश्वर इत्यर्थ इति तन्न । कृतशब्देनैव धर्माधर्मरूपकर्मोक्तिसंभवेन प्रयत्नशब्दवैयर्थ्यात् । धर्मादेरप्रयत्नरूपत्वाच्च । पूर्वकर्मप्रयत्नं चे'त्यादिभाष्योदाहृतस्मृतिविरोधाच्चेति ।

केचित्तु ईश्वरो जीवस्य चिच्छक्तिं प्रवृत्तिशक्तिं करणकलेवरादि सहकारिजातं च दत्वा प्रथमप्रवृत्तावुदास्ते जीवस्तु स्वयमेव प्रवर्तते। तथाहि । विषयविशेषसन्निधिस्तावद्भोगादृष्टात् । तत्रेच्छादिश्च वासनाविशेषात् । वासनोन्मेषश्च तत्तद्देहारंभकादृष्टाज्जन्मकाल एव सिद्ध इति नेशापेक्षा । एवञ्च प्रथमेच्छाप्रयत्नयोरभग्नस्वातंत्र्यस्य जीवस्य विध्यादिविषयत्वं, पुण्यपापादिकर्तृत्वं, तत्फलभोक्तृत्वं च युक्तम् । द्वितीयेच्छादावीश्वरोनुमंता । प्रवृत्तप्रवर्तको ह्यनुमंता । तदा, हेत्वंतरासन्निधापितमपि विषयं बुद्धौ सन्निधापयति । अयमेव चौदासीन्यावस्थातोनुमंतृत्वावस्थाया विशेषः । सा चानुमतिः प्रथमप्रवृत्तिफलप्रदातृरूपेति नेश्वरस्य नैर्घृण्यादि । एवं विशेषोपकारं प्रथमत एव केषुचिदीश्वरः करोतीति तत्र प्रयोजकोपि भवति । अप्रवृत्तप्रवर्तको हि प्रयोजकः । 'एष ह्येव साधुकर्म कारयती'त्यादिश्रुतिस्तु द्वितीयादिप्रवृत्तावनुमंतृत्वादिविषया । अन्यथा हि विधिनिषेधशास्त्रानर्थक्यं स्यात् । तदुक्तं 'आदावीश्वरदत्तयैव पुरुषः स्वातंत्र्यशक्त्या स्वयं तत्तज्ज्ञानचिकीर्षणप्रयतनान्युत्पादयन्वर्तते । तत्रोपेक्ष्य ततोनुमत्यविदधत्तन्निग्रहानुग्रहौ तत्तत्कर्मफलं प्रयच्छति ततः सर्वस्य पुंसो हरि-' रितीति । अत्र ब्रूमः । 'एष ह्येवे'त्यादिश्रुतिसंकोचेनेश्वरस्याद्यप्रवृत्तावौदासीन्यकल्पनं न तावत् 'तेषां सततयुक्तानां भजतां प्रीतिपूर्वकं । ददामि बुद्धियोगं तं । तानहं द्विषतः क्रूरान्संसारेषु नराधमान् । क्षिपामी'त्यादिवचनाविरोधाय । अत्र साधनानुसारिफलदानस्यैवोक्त्याऽऽद्यप्रवृत्तावौदासीन्यानुक्तेः । नापीश्वरस्य नैर्घृण्याद्यभावायौदा-

सीन्यकल्पनम् । प्रथमप्रवृत्तावीश्वरस्य प्रयोजकत्वेपि तदभावस्य समर्थितत्वात् । अन्यथा महानिष्टान्निवर्तने शक्तस्याप्यौदासीन्येनानुमंतृत्वेन च नैर्घृण्यादि दुर्वारम् । यदि च द्वितीयादिप्रवृत्तावनुमतिराद्यप्रवृत्तिफलदानरूपा तर्हि आद्यप्रवृत्तिप्रयोजकतापि 'नानादित्वा'दित्युक्तरीत्यानादिपूर्वकर्मफलदानरूपास्तु । नापीश्वरस्य कर्मफलानन्वयाय तत्कल्पनम् । प्रयोजकत्वेपि विधिनिषेधातीतत्वादेव तदुपपत्तेः । अन्यथा शक्तस्याप्यौदासीन्येनानुमंतृत्वेन च तदन्वयो दुर्वारः । एतेन यथा पित्रा पुत्रयोः सदसद्व्ययसाधारणे वित्तक्षेत्रादिके विभज्य दत्ते तत्र कस्यचित् सद्व्यये कस्यचिदसद्व्यये च तत्फलान्वयः पुत्रयोरेव । न तु पितुः । तद्वदिहापि । ईश्वरस्य सदसत्प्रवृत्तिसाधारणकारणभूतचिच्छक्त्यादिमात्रदातृत्वाद्विशिष्य तत्प्रवृत्त्यादौ प्रागहेतुत्वादिति निरस्तम् । पितृवदीश्वरस्य भाविसदसत्प्रवृत्त्यज्ञानाभावात् । अननुमंतृत्वाभावात् । आद्येच्छाप्रयत्नौ प्रत्यहेतुत्वाभावाच्च । नापि जीवस्य विध्यादिविषयत्वाय तत्कल्पनम् । द्वितीयादिप्रवृत्ताविव प्रथमप्रवृत्तावप्यस्वातंत्र्येप्युक्तरीत्या तदुपपत्तेः । नहि चुल्लीसंमार्जने स्वातंत्र्यमात्रेण काष्ठप्रक्षेपादावस्वतंत्रोपि पाके विनियुज्यते । नापीश्वरेतरहेतुभिरेव प्रथमप्रवृत्तेरनुपपत्त्या तत्कल्पनम् । तत एव द्वितीयादिप्रवृत्तावपि तत्कल्पनापातात् । श्रुतिस्तूभयत्र समा । किञ्च यत्रेश्वर आदावेव प्रयोजकस्तत्र वैषम्यं दुर्वारम् । किञ्च प्रथमप्रवृत्तेरपि पूर्वकर्मफलत्वात्त्वन्मतेपीश्वरस्य सर्वकर्मफलदत्वात्कथं तत्रौदासीन्यम् । ननु च प्राचीनकर्मफलदानेच्छयेशस्तां करोति । नतु फलान्तरसाधनानुष्ठापनेच्छया । द्वितीयादिप्रवृत्तिं तु तदनुष्ठापनेच्छया । ततश्चाभिसंधिभेदाददोष इति चेन्न । पूर्वापराधफलत्वेनैव चोरस्यातिपीडाकुर्वतस्तां च मृतिहेतुतया जानतो राजादेश्चोरमृत्यादावौदासीन्यादर्शनेन प्राचीनकर्मफलत्वेनाद्यप्रवृत्तिं कुर्वतस्तां चानर्थहेतुतया जानत ईश्वरस्य तत्रौदासीन्यायोगात् । घटप्रकाशनार्थं दीपमुपाददानस्य तु पुंसो दैवात्तेन पटे प्रकाशिते तत्रौदासीन्यं युक्तम् । तेन दीपेन नियमेन पटः प्रकाशयिष्यत इति

ज्ञानाभावात्। तथा ज्ञाने तु तत्रापि नौदासीन्यम्। तस्मात्तत्तत्स्वभावाद्यनुसारित्वादेवेश्वरस्य न वैषम्यादीति भाष्योक्तमेव युक्तमिति॥

॥ इति कर्तृत्वाधिकरणम्॥ १७॥

---

अथ अंशाधिकरणम्

## ॥ ॐ अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ॐ॥

'परात्तु तच्छ्रुते'रिति पूर्वोक्तो जीवेश्वरयोरुपजीव्योपजीवकत्वरूपः संबंधः समर्थ्यत इति वा पूर्वोक्तस्य जीवानामस्वतंत्रकर्तृत्वस्य निर्वाहाय भिन्नांशत्वमुच्यत इति वा संगतिः। अत्र जीवानां ब्रह्मांशत्वं निर्णेतुमशक्यमुत शक्यमिति चिंता। तदर्थमंशत्वविधिनिषेधौ किमेकरूपांशत्वविषयावुत विधिर्भिन्नांशत्वविषयो निषेधस्तु स्वरूपांशत्वविषय इति। संदेहटीकायां तु संदेहात्मकपूर्वपक्षकोटिकीर्तनेन तद्विरुद्धा सिद्धांतकोटिरर्थलब्धेति पृथङ्नोक्ता। अत्र भाष्ये संदेहकारणं श्रुतिविगानमेवोक्तम्। नतु पूर्वपक्षेऽनंशत्वनिर्णये हेतुरुक्तः। न्यायविवरणेपि नानाश्रुतेरप्रामाण्यमित्येव पूर्वपक्षयित्वा प्रामाण्येनैव सिद्धांतितम्। अनंशत्वेन पूर्वपक्षकरणं सिद्धांताविरुद्धं च। सिद्धांतेपि मुख्यांशत्वाभावात्। अतष्टीकाकारोप्यनध्यवसायेनैव पूर्वपक्षमाह।

निर्णयो न युज्यत इति पूर्वपक्ष इति॥ सिद्धांते त्वयं भावः। जीवस्य ब्रह्मांशत्वं अत एव तदुपजीवकत्वेन तच्छेषत्वरूपः संबंध एव मुमुक्षुणावश्यं ज्ञेयः। भाष्योक्तास्वंशत्वपरासु 'अंशो ह्येष परस्य नाना ह्येनं व्यपदिशंति। पितेति पुत्रेति भ्रातेति सखेति चे'त्यादिश्रुतिषु,

'पुत्रभ्रातृसखित्वेन स्वामित्वेन यतो हरिः।
बहुधा गीयते वेदैर्जीवोंशस्तस्य तेन त्वि'त्यादिस्मृतिषु च

'अवः परेण पितर'मित्यादिभाष्योक्तश्रुतिस्मृतिसिद्धपितृत्वपुत्रत्वस्वा-

मित्वभ्रातृत्वसखित्वादिप्रकारैर्भगवत उपजीव्यत्वरूपसंबंधव्यपदेश एव जीवस्यांशत्वे हेतुरुक्तः । 'नैवांशो न संबंध'इत्याद्यनंशत्वश्रुतिषु चानंशत्वे संबंधाभावो हेतुरुक्तः । टीकायामपि 'तत्संबंधित्वमेवांशत्व' मित्युक्तम् । परैरपि 'सोन्वेष्टव्यः स विजिज्ञासितव्यः । य आत्मानमंतरो यमयतीत्यादिसंबंधव्यपदेश एव नानाव्यपदेश' इत्युक्तम् । परंतु तन्मते संबंधो मिथ्या । नच श्रुत्यैव श्रौतांशशब्दार्थ उक्तेप्यन्योर्थो युक्तः । नच कस्यापि मते जीवस्य तंत्वादिवदंशत्वमस्ति । नियतं च तंत्वादेरंशस्यांशिनं प्रति शेषत्वम् । तस्मात्पुत्रः पितुरिव भृत्यादिः स्वाम्यादेरिव च जीवोपीश्वरपोष्यत्वादिना तद्गर्भवासित्वेन तदंतर्भूतत्वादीश्वरस्यांशः । 'यो नः पिता पतिं विश्वस्यात्मेश्वर'मित्यादिश्रुतेः । 'पितासि लोकस्य चराचरस्य पिताहमस्य जगतो माता धाता पितामहः । गतिर्भर्ता प्रभुस्साक्षी निवासश्शरणं सुहृत् । पितेव पुत्रस्य सखेव सख्युः पिता माता सुहृद्बंधुर्भ्राता पुत्रस्त्वमेव मे' इत्यादिस्मृतेश्च । भगवतः पुत्रत्वमपि पुन्नाम्नो नरकात्त्राणकर्तृत्वादुपजीव्यत्वेनैव । जीवस्य व्यंजकत्वरूपं पितृत्वमप्यभिव्यक्तेन भगवता संरक्ष्यत्वादुपजीवकत्वेनैव । अनंशत्वश्रुतिस्तु लोके स्वामिभृत्यादेरन्योन्यमुपकार्योपकारकत्वेपीहेश्वर उपकर्तैव । नतूपकर्तव्यः । जीवस्तूपकर्तव्य एव । नतूपकर्तेत्यभिप्राया । अत एव भाष्योदाहृतानंशत्वश्रुतौ 'नापेक्ष्यो जीवः परस्ये'ति जीवस्यानुपकर्तृत्वमुक्त्वा 'फलदः प्रभुरेकराट् । न नियम्यः स कस्यापि स सर्वस्य नियामक'इतीश्वरस्यैवोपकर्तृत्वमुक्तम् । एवञ्च 'नासावस्य कुतश्चन । नायं तस्यापि कश्चने'ति श्रुतेरपि असौ ईश्वरः । अस्य जीवस्य । कुतश्चन केनापि प्रकारेण । नोपकर्तव्यः । अयं जीवः । तस्य ईश्वरस्य । कुतश्चन नोपकर्तेत्येवार्थः । उक्तसंबंधरूपशेषत्वे सौत्रान्यथाशब्दोक्तः संबंधाभावव्यपदेशोपि हेतुः । न चेद्भाष्ये 'अन्यथा चे'ति चशब्दोऽस्वरसः स्यात् । भाष्योदाहृतश्रुतौ 'नासावस्य कुतश्चने'ति संबंधनिषेधोपि प्रकृतानुपयुक्तः स्यात् । ईश्वरस्य सदोपजीव्यत्वमेवेत्यादिमाहात्म्यं च न सिध्येत् । असंबंधरूपानंशत्वश्रुतेर्गत्युक्तिश्च

सूत्रभाष्यारूढा न स्यात्। अनंशत्वश्रुतेर्गतिं चाहे'ति भाष्यं तु भेदाभेदव्यपदेशप्रयुक्तांशत्वप्रतियोगिकानंशत्वविषयम्। नत्वसंबंधरूपानंशत्वविषयम्। अत एव तत्वप्रदीपे 'नानाव्यपदेशः संबंधव्यपदेशः। अन्यथाव्यपदेशः संबंधाभावव्यपदेश' इत्युक्तम्। 'हेत्वंतरेणैतत्समर्थयत' इति टीकास्थैतच्छब्दोप्युक्तवक्ष्यमाणसंबंधाभेदरूपोभयविषयः। टीकाकारीया 'अन्यथे'त्यस्य वक्ष्यमाणसंबंधोक्तिरपि वक्ष्यमाणेनापि संबंधाभिप्राया। नतूक्तेनासंबंधाभिप्राया। जीवेश्वरयोः सदोपजीव्योपजीवकत्वरूपसंबंधव्यपदेशोपि भेदव्यपदेश एवेति-टीकोक्तो वक्ष्यमाणेनापि संबंधो युक्तः। तस्माज्जीवः सदा सर्वत्र सर्वैरपि प्रकारैरीश्वरोपजीवकरूपभिन्नांश एव। नतु मत्स्यादिवत् स्वरूपांशः।

किञ्च संवर्तकाग्निं प्रति ततोऽत्यंतभिन्नस्याग्निकणस्येवानर्घेण महारत्नेन तुलितस्य गुरुत्वमात्रेण समस्य रत्नाभासस्येव जीवस्य ततो न्यूनत्वे सति किंचित्सादृश्यरूपं गौणं भिन्नांशत्वमेव। अस्य महारत्नस्यायं रत्नाभासः सहस्रांश इत्यादि व्यवहारात्। उक्तं हि 'स्फुलिंगसंवर्तकयोर्यदंतर'मिति। उक्तं चानुव्याख्याने 'सादृश्यं चांशतास्य त्वि'ति। भाष्ये च 'विभिन्नांशोल्पशक्तिस्स्यात्किंचित्सादृश्यमात्रयु'गिति। अत्र चाद्यंशत्वे सौत्रनानाव्यपदेशशब्दोक्तस्संबंधव्यपदेशः सौत्रान्यथाव्यपदेशशब्दोक्तासंबंधव्यपदेशसहितो हेतुः। द्वितीये तु सौत्रदाशकितवादित्वशब्दोक्तो भेदव्यपदेशः सौत्रान्यथाशब्दोक्ताभेदव्यपदेशसहितो हेतुरिति द्रष्टव्यम्। अत एव सिद्धांतभाष्योदाहृतायामाद्यश्रुतौ नानाव्यपदेशो भेदाभेदव्यपदेशनिरपेक्ष एव हेतुरुक्तः। द्वितीयश्रुतौ तु नानाव्यपदेशनिरपेक्ष एव भेदाभेदव्यपदेशो हेतुरुक्तः। स्मृतौ च नानाव्यपदेशं हेतुमुक्त्वा 'अतश्चांशत्वमुद्दिष्ट'मिति भेदाभेदव्यपदेशाख्यं हेत्वंतरमुक्तम्। टीकायामपि 'हेत्वंतरेणैतत्समर्थयत' इत्युक्तम्। एवञ्चांशत्वविधिनिषेधौ भिन्नांशत्वरूपांशत्वविषयाविति न विरोध इति॥ एतद्दीर्घतमोवाक्यमिति॥ यदि हि 'अहं शतधा अहं

सहस्रधा ' इत्यादिवदिदमीश्वरवाक्यं स्यात्तदा श्रुतिस्थेन 'मे' इति शब्देनोक्तं स्वोपास्यत्वमयुक्तं स्यादिति भावः । सूर्यमंडलसाम्योक्त्येति ॥ 'अथ यदेतदादित्यस्य शुक्लं भाः सैवर्गथ यन्नीलं परः कृष्णम् । अथ यदेतदक्ष्णः शुक्लं भाः सैवर्गथ यन्नीलं परः कृष्ण'मिति तत्वप्रदीपोदाहृतश्रुत्यंतरोक्तस्याक्षिगतस्य शुक्लादिरूपत्रयवत्त्वेनादित्यसाम्यस्य 'त्रिवृदिव वै चक्षुः शुक्लकृष्णं कनीनिके'ति महैतरेयोपनिषदि कथितत्वेनेत्यर्थः । मोक्षधर्मे ' शुश्रूषु 'रित्यत्र जीवनिष्ठशुश्रूषां प्रति प्रकृतो नारायण एव विषयत्वेन संबध्यत इत्याह ॥ शुश्रूषुस्तस्येति ॥ एवञ्च भूतसंबंधाधीनप्रलयादिमत्त्वाकार्यत्वप्रवृत्तिनिमित्तकाभ्यां भूतप्रलयाव्यक्तशब्दाभ्यामुक्तो जीवसमूहस्तस्य नारायणस्य शुश्रूषुर्मोक्षार्थं जिज्ञासुरिति योजनेति भावः । तत्वप्रदीपे तु ' भूतप्रलयस्थानभूताऽव्यक्तशब्दिता श्रीः प्रकृतस्य नारायणस्य शुश्रूषुः । येचाप्यक्षरमव्यक्तमितिस्मृते'रिति प्रकारांतरेण योजितम् । ननु मोक्षधर्मे यत्किंचिज्जीवजातं देहबद्धमित्यनेन जीवानां देहबंधमुक्त्वा 'ईश्वरो ही'त्यादिनांशिनो नारायणस्यैव निर्गुणादिशब्दैर्देहासंबंध उक्तो नत्ववताराणामंशानामित्यत आह ॥ अवतारप्रसंग इति ॥ प्रकरणादवतारविषयमेव तद्वाक्यम् । नारायणशब्दस्त्वंश्यंशाभेदाभिप्राय इत्यर्थः । ' प्रतिरूपो बभूवे 'त्यत्रेंद्रशब्दोक्तेश्वरस्य प्रतिबिंबत्वं नोच्यते । प्रतिरूपप्रतियोगिवाचकरूपशब्देनैवोक्तेः । किंतु ' अस्ये'तिशब्दनिर्दिष्टजीवसमुदायस्यैवेत्याह ॥ जीवसमुदाय इति ॥ अत्र सूत्रे 'स्मर्यत' इत्यनेन जीवस्येश्वरांशत्वे स्मृतिरुक्ता ' स्मरंति चे '-त्यनेन त्वंशत्वेपि मत्स्याद्यवताराणां स्वरूपांशत्वं जीवानां भिन्नांशत्वमित्यत्र स्मृतिरुक्ता । 'प्रकाशादिव'दित्यनेनोक्तस्वरूपांशत्वभिन्नांशत्वात्मके वैषम्ये तेजोभिमानिवह्निदेवतांशयोः कालाग्न्यभिमानिखद्योताभिमानिनोः स्वरूपांशत्वभिन्नांशत्वरूपं वैषम्यं दृष्टांतितम् । 'ज्योतिरादिव 'दित्यनेन त्वंशत्वेप्यवताराणां जीवानां वा साम्ये हेत्वंतरत्वेनोक्तदेहासंबंधतत्संबंधप्रयुक्तेऽश्यनुग्राह्यत्वानुग्राह्यत्वरूपवैषम्ये सूर्यमंडलाभिमान्यादित्यांशयोर्वियद्गतप्रभाभिमान्यक्षिगोलकाभिमानिनोःपर-

देहासंबंधसंबंधप्रयुक्तमंश्यननुग्राह्यत्वानुग्राह्यत्वरूपं वैषम्यं दृष्टांतितं इति भेदः। अक्ष्यभिमानिनी देवताहि परदेहदोषेण दुष्टा। तस्यादेवतात्वं त्वंतर्धानादिशक्तियोगमात्रेणेति द्रष्टव्यम् । [अत्र चांशत्वमयं ज्येष्ठस्यांशोयं तु कनिष्ठस्येत्यादाविव शेषत्वविशेषः। नचोपात्तस्य षष्ठीनिर्दिष्टस्य ज्येष्ठादेरप्यंशं प्रति संबंध्यंशित्वत्यागेन समुदायस्य तत्कल्पनं युक्तम् । अवयवस्याप्यवयविनं प्रति शेषत्वविशेष एवांशत्वम्। स्वरूपांशस्याप्यभेदेप्यंशत्वादेवांशिनं प्रत्युपसर्जनत्वमस्त्येव । भेदाभेदाभ्यां तु स्वरूपांशभिन्नांशविभागः । यद्वा संवर्तकाग्निं प्रत्यग्निकणस्येव ब्रह्म प्रति जीवस्य ततोन्यूनत्वे सति तत्सदृशत्वमंशत्वम् । उक्तं हि ' यथार्चिषोग्ने 'रिति। स्वरूपांशस्यापि शक्त्यात्मना महत्वेप्यंशिवद्व्यक्त्यात्मना तदभावात्ततोन्यूनत्वम् । यद्यपि स्वरूपांशे तद्भिन्नत्वे सति तन्निष्ठबहुधर्मयोगित्वरूपं सादृश्यं नास्ति। तथापीह विवक्षितस्तन्निष्ठबहुधर्मयोगित्वरूपस्तदेकदेशोस्त्येव । परंतु भिन्नांशे जीवे बहुत्वं त्रिचतुरादौ संकुचितम् । स्वरूपांशे त्वसंकुचितम् । अत एव स्वरूपभिन्नांशयोर्भेदः । प्रतिबिंबत्वमपि तदधीनत्वे सति तत्सादृश्यविशेष एवेति न प्रतिबिंबवाचिश्रुतिस्मृतिसूत्रविरोधः । यद्वा तदेकदेशत्वं तदंशत्वम् । एवञ्च स्वरूपांश इव जीवे तदेकदेशत्वाभावान्महारत्नेन सह तुलित(काचखंडे)कांचनखंडे रत्नचतुर्थांशत्ववन्मार्गे विन्यस्तपादाकृतौ पादत्ववच्चांशत्वं गौणम् । मुख्यत्वे प्रबलबहुभेदश्रुत्यादिबाधात्। उक्तं ह्यनुव्याख्याने 'अंशाभासाश्च सर्वेपि परस्यांशा न मुख्यत 'इति। अत्र चाद्ये सौत्रो नानाव्यपदेशो हेतुः। अत एव भाष्ये पितृत्वस्वामित्वादिना ब्रह्मणः शेषित्वमुक्तम्। द्वितीयतृतीययोर्भेदाभेदव्यपदेशौ हेतू। प्रबलाभेदश्रुतिः सादृश्याभिप्रायेति दर्शयितुमुभयोक्तिः।

अन्येतु । भेदाभेदश्रुत्योर्विरोध इति पूर्वपक्षे भेदस्य प्रत्यक्षादिना प्राप्तत्वाच्छ्रुतेस्तत्रातात्पर्यात्सामिथ्या। अभेदस्य त्वप्राप्तत्वाच्छ्रुतेस्तत्र तात्पर्यात्स सत्य इति सिद्धांत इत्यधिकरणतात्पर्यमित्याहुः । तन्न । मद्रीत्यांशानंशत्वश्रुत्योर्विरोधे प्राप्ते तदविरोधायानंशत्वश्रुतेर्गतिमुक्त्वांशत्वोक्तेरेव 'अंशो

नानाव्यपदेशा’दिति सूत्राक्षरानुसारित्वात्। अन्यथांशपदस्थानेऽभिन्नपदं प्रयुज्येत। नह्यंशत्वमेवाभिन्नत्वम्। नापि तद्व्याप्तम्। पटांशस्याप्येकस्य तन्तोः पटाद्भेददर्शनात्। किञ्च त्वन्मते सूत्रोक्तं जीवस्यांशत्वं न तावदारंभकत्वम्। ब्रह्मणोऽनादित्वात्। नापि खंडत्वम्। अच्छेद्यत्वात्। नापि समुदायित्वम्। [समुदाय्यनन्यत्वात् समुदायस्य व्यवहारदशायामपि जीवान्यब्रह्मायोगात्।] एकैकस्य जीवस्य मुक्तावेकैकस्य कन्थाभागस्यापगमे कन्थाया इव ब्रह्मणो ह्रासप्रसंगात्। अनंगीकाराच्च। नापि भिन्नाभिन्नत्वम्। विरोधात्। ‘भेदाभेदौ न मुख्यत’ इत्यादिस्मृतिविरोधाच्च। नाप्यवयवत्वम्। तन्तोः पटं प्रतीव निरवयवब्रह्म प्रत्यकल्पितस्य तस्यायोगात्। अत एव परेषां भाष्यं ‘अंश इवांशः। नहि निरवयवस्य मुख्योंशः संभवती’ति। नापि घटाकाशस्याकाशं प्रतीव कल्पितावयवत्वम्। प्रतिबिंबपक्षे तदयोगात्। अवच्छेदपक्षस्य च विवरण एव निरासात्। आकाशांशः स्वाभाविक इत्यन्यत्रोक्तत्वात्। ‘आभास एव चे’त्युत्तरसूत्रेण ‘आभास एव चैष जीवः परस्य जलसूर्यकादिव’दिति त्वद्भाष्येण च विरोधाच्च। कल्पितपरत्वे ‘पादोस्य विश्वा भूतानी’त्यादिश्रुतेः, ‘ममैवांश’ इत्यादिस्मृतेः, ‘अंश’ इति सूत्रस्य चाप्रामाण्यापाताच्च। नाप्यत्यंताभिन्नत्वम्। ‘नानाव्यपदेशा’दिति सौत्रहेत्वयोगात्। तत्रांशशब्दास्वारस्याच्च। [प्रतिबिंबवाद्युक्तश्रुत्यादिविरोधाच्च। पटाद्भिन्नेप्येकस्मिंस्तंतौ पटांशत्वदर्शनाच्च।] नापि प्रतिबिंबत्वम्। परपक्षे प्रतिबिंबनासंभवस्यान्यत्रोक्तत्वात्। तेनात्यन्तभेदस्यैव सिद्धेश्च। [यच्चोक्तमुभाभ्यां सूत्रेत्वंशत्वे नानाव्यपदेशोऽन्यथा व्यपदेशश्च समुच्चित्य हेतुरिति तन्न। ‘व्रीहिभिर्यजेते-’ त्यादौ तृतीययेव ‘नानाव्यपदेशा’दिति पञ्चम्या निरपेक्षस्य हेतुत्वप्रतीतेः। यच्चोक्तमुभाभ्यां आद्यसूत्रे ‘अन्यथे’त्यनेन नानात्वादन्यथात्वं विवक्षितमिति तन्न। तथात्वे ‘अन्यथे’त्यनेनैव वा ‘दाशकितवादित्वमधीयत’ इत्येतावतैव वा पूर्णत्वेनोभयवैयर्थ्यात्। यच्चोक्तं भेदश्रुतिः प्राप्तविषयेति तन्न। सौत्रेणापिशब्देनाभेद इव भेदेपि तात्पर्यप्रतीतेः। त्वदुक्तस्य नियम्यनियामकोपास्योपासकरूपेण नानाव्यपदेशस्याप्राप्तप्रति-

बोधनत्वाच्च । नच तात्पर्यविषयेण सत्येन नियामकत्वादिनाक्षिप्तो भेदो मिथ्या । किञ्च प्रत्यक्षादिसिद्धो भेदो यदि सत्यो न तर्हि श्रुत्याप्यभेदसिद्धिः । यदि तु मिथ्या तर्हि न भेदश्रुतिरनुवादिनी । तदप्राप्तसत्यभेदप्रापकत्वोपपत्तेरित्युक्तं जिज्ञासासूत्रे ।] किञ्च जीवस्यांशत्वं किं शुद्धचिन्मात्रं प्रति किं वोपहितमीश्वरं प्रति । नाद्यः । 'परात्तु तच्छ्रुते'रितिपूर्वोक्तस्येश्वरनियन्तृत्वस्य सिद्ध्यर्थं जीवेश्वरयोरंशांशिसंबन्ध उच्यत इति त्वयापि भाषितत्वेन प्रक्रमाननुगुणत्वात् । द्वितीयसूत्रोक्ते 'पादोस्य विश्वा भूतानी'ति मन्त्रवर्णे इदंशब्देन सहस्रशीर्षत्वादिविशिष्टप्रकृतेश्वरस्य तृतीयसूत्रो(क्तायामु)क्ते 'ममैवांश' इति (स्मृतौ)स्मरणे चेश्वरप्रयुक्तास्मच्छब्देनेश्वरस्यैवोक्तेश्च । नांत्यः । त्वन्मतेपि विरुद्धधर्मवतोर्जीवेशयोरभेदाभावेनाभेदव्यपदेशस्यायोगात् । त्वया 'निरतिशयोपाधिसंपन्नश्चेश्वरो हीनोपाधिसंपन्नाञ्जीवान्प्रशास्ती'ति भाषितत्वेनेश्वरस्याप्युपहिततया महागृहाकाशं प्रत्यल्पगृहाकाशस्येश्वरं प्रति जीवस्यांशत्वायोगाच्च । नच मठाकाशः पुनर्घटेनेवेश्वरोपाधिनावच्छिन्नमेव चैतन्यं पुनर्जीवोपाधिना चावच्छिद्यते । तथात्वे हि मुक्तस्य शुद्धब्रह्मत्वं न स्यात् । किञ्च न तावदविद्यांतःकरणाद्युपाधिविशिष्टस्यांशत्वम् । तत्राभेदव्यपदेशायोगात् । नापि तदुपलक्षितस्य चिन्मात्रस्य । तत्र काल्पनिकभेदस्याप्यभावेन नानाव्यपदेशायोगात् ।

यच्चोक्तमुभाभ्यां आद्यसूत्रेऽन्यथेत्यनेन नानात्वादन्यथात्वं विवक्षितमिति तन्न । तथात्वे चान्यथाचापीत्यनेनैव वा 'दाशकितवादित्वमधीयत एक' इत्यनेनैव वा पूर्णत्वेनेतरवैयर्थ्यात् । द्वितीयतृतीयसूत्रयोस्त्वनुपपत्तिरुक्ता । यच्चोक्तं जीवं प्रत्यंश्यपीश्वरो न जीववद्दुःखी । प्रतिबिंबे कम्पयुक्तेपि तद्रहितसूर्यादिवदिति चतुर्थार्थ इति तन्न । मम रीत्येश्वरावताराणां जीवानां चांशत्वाविशेषेपि स्वरूपांशत्वभिन्नांशत्वात्मकावांतरविशेषरूपसिषाधयिषितधर्मवतोर्वैदिकयोश्चेतनयोर्वैदिकौ चेतनौ प्रति सूत्रप्रामाण्यापादकतात्विकव्यवस्थायां 'यथा सूर्यप्रभाक्षिणी' इति स्मृतिसिद्धयोर्दृष्टांतत्वस्य संभवे तव रीत्या सिषाधयिषितदुःखादिव्यवस्था-

रहितयोर्लौकिकयोरचेतनयोर्वैदिकौ चेतनौ प्रतिसूत्राप्रामाण्यापादका तात्विकव्यवस्थायां 'बहवः सूर्यका यद्वत्सूर्यस्य सदृशा जल' इत्यादि स्मृत्यादिविरुद्धस्य दृष्टांतत्वस्यासंभवात् । बिंबप्रतिबिंबयोरपि तात्विकाभेदस्य पक्षतुल्यतया दृष्टांतत्वायोगाच्च । आदिशब्देन घटाकाशमहाकाशादिकउक्तेपि प्रकाशपदस्य 'आभास एवे'त्यनेन पुनरुक्तेश्च । ननु चन्द्रादावंगुल्यवष्टंभादिना प्रतीतवक्रत्वादिवज्जीवे प्रतीतं दुःखादिकं मिथ्येतीह प्रकाशपदेन विवक्षितमिति चेन्न । ईशेपि जीववत्संसारित्वापादकं मिथ्यादुःखं स्यादिति शंकाया अनेनापरिहारात् । यच्चोक्तं—

'तत्र यः परमात्मा हि स नित्यो निर्गुणः स्मृतः ।
न लिप्यते फलैश्चापि' इति स्मृतिः पश्चमेन 'स्मरंती'त्यनेन विवक्षितेति तन्न । अत्र भेदस्यैवोक्त्याऽभेदेपि व्यवस्थेत्यनुक्तेः । काल्पनिकभेदेन व्यवस्थायामपि तात्विकाभेदेनाव्यवस्थापि स्यादिति शंकाया अपरिहाराच्च । यच्चोक्तं ब्रह्माभेदेपि जीवस्य विधिनिषेधबद्धत्वं देहाभिमानाद्युक्तमशुचिदेशसंबन्धात्सवितृप्रकाशस्य हेयत्वमिव । देहानभिमानाद्धि ज्ञानिनो न विध्यादीति षष्ठार्थ इति तन्न । मम रीत्यांश्यधीनत्वरूपसाध्येन देहसंबन्धरूपेण साधनेन च युक्तस्य 'यथा सूर्यें'तिस्मृतिसिद्धस्य चेतनस्य चेतनं प्रति दृष्टांतत्वसंभवे तव रीत्या विध्यादिबद्धत्वरूपसाध्येन देहसंबन्धरूपहेतुना च रहितस्य स्मृत्याद्यसिद्धस्य दृष्टांतत्वायोगात् । ब्रह्मैव जीव इति मते तस्य देहसंबन्धापरिहाराच्च । अमुक्तावस्थायामाहाराद्यर्थे प्रयतमानस्य ज्ञानिनो विहितानुष्ठानकाल एवाभिमानस्यायोगाच्च । यच्चोक्तं कर्तुर्भोक्तुश्चोपहितात्मनः सांतत्याभावेन सर्वशरीरसंबन्धात्कर्मभोगासंकर इति सप्तमार्थ इति तन्न । दुःखादिभोक्तृत्वस्योपाधिविशिष्टगतत्वे बन्धस्य शुद्धगतमोक्षसामानाधिकरण्यायोगात् । उपाधिसंबन्धाच्छुद्धगतत्वे सांकर्यापरिहारात् । एतेन यदुक्तं जीवेशयोर्बिंबप्रतिबिंबत्वान्मुखप्रतिमुखयोः श्यामत्वावदातत्ववद्दुःखित्वादीत्यष्टमार्थ इति तदपि निरस्तम् । सौत्रेणाभासशब्देनैव हेतुतदाभासयोरिव बिंबप्रतिबिंबयोर्भिन्नत्वस्य सूचितत्वात् ।

केचित्तु ।। एकवस्त्वेकदेशत्वमंशत्वम् । तच्च जीवविशिष्टं ब्रह्म प्रति विशेषणस्य जीवस्यास्तीत्याहुः । तन्न । शुक्लः पटः पटस्य शौक्ल्यमिति विशेषणविशेष्यभावस्य कामचारित्वेन ब्रह्मविशिष्टं जीवं प्रति ब्रह्मणोप्यंशत्वप्रसंगात् । स्वविशिष्टब्रह्मैकदेशस्य जडस्यापि ब्रह्मांशत्वप्रसंगाच्च । विशिष्टांतर्गतस्य विशेष्यस्य ब्रह्मणोप्यंशत्वापाताच्च । द्वितीयसूत्रोक्तायां 'पादोस्ये'ति श्रुताविदंशब्देन 'उतामृतत्वस्येशान' इति पूर्वप्रकृतस्य मुक्तनियामकस्य निष्कृष्टस्य तृतीयोक्तायां 'ममैवांश' इति स्मृतावप्यस्मच्छब्देन 'तत्तेजो विद्धि मामक'मित्याद्युत्तरवाक्य इव निष्कृष्टस्य विशेष्यस्य ब्रह्मण एवांशित्वोक्तेश्च । किञ्च जीवविशिष्टं ब्रह्मेति कोऽर्थः । किं विशेष्यमब्रह्मैव तत्तु जीवशिष्टं सद्ब्रह्म भवतीति वा किं वा विशेष्यमेव ब्रह्म तस्य तु जीवो विशेषणमिति । आद्ये जीवस्य ब्रह्मैकदेशत्वसिद्धावपि ब्रह्मणो जीवांतर्यामित्वतच्छेषित्वमुक्तनियामकत्वजगत्कारणत्वादयो न स्युः । न हि नियम्यजीवविशिष्टस्तन्नियामकः । अंत्ये च ब्रह्मणोंतर्यामित्वादिसिद्धावपि जीवस्य ब्रह्मैकदेशत्वासिद्धिः । न हि विशेषणं विशेष्यस्यैकदेशः ॥ ॥ इति अंशाधिकरणम् ॥ १८ ॥

---

## अथ अदृष्टाधिकरणम्

## ॥ ॐ अदृष्टानियमात् ॐ ॥

अंशत्वेपि जीवस्यावतारसाम्यं नेत्यत्र हेत्वंतरत्वेन पूर्वोक्तं प्रतिबिंबत्वमाक्षिप्य समाधीयत इति संगतिः । अत्र जीवस्य प्रतिबिंबत्वश्रुतिः किमेकब्रह्मप्रतिबिंबत्वे वैचित्र्यायोग इति युक्त्यनुगृहीतया प्रतिबिंबत्वाभावश्रुत्या बाधितोत नेति चिंता। [अत्र श्रुतिसमन्वयेनोक्तं ब्रह्मणस्स्रष्टृत्वादिकमयुक्तमुत नेति चिंता। तदर्थं श्रुतिरप्रमाणमुत नेति । तदर्थं जीवस्य प्रतिबिंबत्वश्रुतिः किमेकब्रह्मप्रतिबिंबत्वे वैचित्र्यायोग इति युक्त्यनुगृहीतया प्रतिबिंबत्वाभावश्रुत्या बाधितोत प्रतिबिंबत्वाभाव-

श्रुतेः सोपाधिकप्रतिबिंबत्वाभावविषयत्वादबाधितेति] तदर्थं बिंबस्यैकत्वेपि स्वरूपोपाधिवैचित्र्यात्प्रतिबिंबवैचित्र्यमयुक्तमुत नेति । [तदर्थं स्वरूपस्योपाधित्वमयुक्तमुत नेति ।] श्रुत्यंतरमनुमीयत इति ॥ 'न संबन्ध' इत्यतीताधिकरणोदाहृतं बिंबप्रतिबिंबभावरूपसंबंधनिषेधकं श्रुत्यंतरमिह भाष्ये संदेहबीजत्वेनोदाहृतमित्यनुमीयते। संदेहबीजत्वेन श्रुतिविगानोक्तेः पूर्वाधिकरणभाष्येषु प्रकृतत्वादित्यर्थः ।

सिद्धांतयदिति ॥ अयं भावः । युक्तमेव जीवानां ब्रह्मप्रतिबिंबत्वम्। जीवतद्गुणयोरभेदेपि विशेषबलाद्गुणगुणिभाववत्स्वरूपभेदयोश्चैतन्याभेदयोश्चाभेदेपि विशेषणविशेष्यभाववत्समवायस्य संबंधसंबंधिभाववच्चाभेदेप्युपाधिप्रतिबिंबभावस्यापि संभवात्। उक्तं हि

'जीवोपाधिर्द्विधा प्रोक्तः स्वरूपं बाह्यमेव च।
बाह्योपाधिर्लयं याति मुक्तावन्यस्य तु स्थिति'रिति ।

अन्यथोद्भूतरूपविशेषवद्द्रव्यस्यैव बिंबग्राहित्वादविद्यांतःकरणादेस्तन्न स्यात्। अचाक्षुषस्य च द्रव्यस्याप्रतिबिंबनाद्ब्रह्मणस्तन्न स्यात् । दृश्यंते च प्रतिध्वनिप्रतिसूर्यछायापुरुषेंद्रचापादीनि भिन्नोपाधिरहितान्यपि प्रतिबिंबानि । श्रुतिश्च

'सोपाधिरनुपाधिश्च प्रतिबिंबो द्विधेयते ।
जीवः परस्यानुपाधिरिंद्रचापो तथा रवे'रिति।

नहि प्रतिध्वन्यादेः स्वधर्माधायकउपाधिरस्ति । नच प्रतिबिंबस्य बिंबेनेवोपाधिनापि निरूप्यत्वं नियतम् । प्रतिध्वन्यादावदर्शनात् । जीवस्य प्रतिबिंबत्वनिषेधश्रुतिस्तु भिन्नोपाध्यायत्तत्वादिरूपप्रतिबिंबत्वनिषेधपरा। वक्ष्यति च भाष्यकारः 'अत एव चोपमा सूर्यकादिव' इत्यत्र तदधीनत्वतत्सादृश्याभ्यामेव जीवस्य सूर्यकाद्युपमा । नतूपाध्यायत्तत्वादिनेति। बिंबप्रतिबिंबयोर्भेदश्च न दर्पणे मम मुखम्। किन्तु मम प्रतिमुखमेवेत्यादिप्रत्यक्षेण, कस्तूरीगुडाग्निपर्वततत्प्रतिबिंबानां सौरभमाधुर्यौष्ण्यगुरुत्वतदभावात्मकवैधर्म्यरूपेणानुमानेन,

'यथैषा पुरुषेछाया एतस्मिन्नेतदातत'मित्यादिश्रुत्या

'तवैव सदृशश्चायं विंबस्य प्रतिबिंबवत् ।
बह्वस्सूर्यका यद्वत्सूर्यस्य सदृशा जले ।
एवमेवात्मकालोके परात्मसदृशा मता । '

इत्यादिस्मृत्या च सिद्धः । न हि दर्पणे मम मुखं लग्नं कूपे वा पतितमिति कश्चित्प्रत्येति । किञ्चाभेदपक्षे ग्रीवास्थमेव मुखं दर्पणस्थं किंवा दर्पणे मुखांतरमारोप्यते यद्वा ग्रीवास्थस्यैव संसर्गमात्रमारोप्यते । नाद्यः । प्रादेशमात्रमुखस्यैकदैवोभयत्रानवस्थानात् । कालभेदेन चेच्चैत्रो बहिरवस्थानकाले गृहांतरिव मुखं दर्पणेवस्थानकाले ग्रीवायां न स्यात् । द्वितीयतृतीययोः कथं प्रत्यभिज्ञा प्रमा । द्वितीये तदेवेदमिति प्रत्यभिज्ञाविषयस्यैक्यस्य बाधितत्वात् । तृतीये तद्विषयस्येदमित्यस्य बाधितत्वात् । न हि प्रातिभासिकव्यावहारिकयोरैक्यं व्यावहारिकम् । न वा गृह एव स्थितस्य चैत्रस्य बहिःसत्त्वज्ञानं प्रमा । न चेदं ज्ञानमिदमित्यंशे भ्रमः ऐक्यांशे तु प्रमेति वाच्यम् । वैपरीत्यस्यापि सुवचत्वात् । शुक्ताविदं पूर्वस्थापितं रूप्यमिति ज्ञानस्याप्यैक्यांशे प्रमात्वापाताच्च । एतेन ग्रीवास्थमुखस्य दर्पणे प्रतीतेन मुखेनैक्यं प्रत्यभिज्ञाविषय इति निरस्तम् । अत्र प्रतिसूर्य एव न तु सूर्य इतिवद्दर्पणे मुखच्छायैव नतु मुखमित्येव प्रतीतेः । अन्यथा प्रतिबिंबेन बिंबानुमितिर्न स्यात् । किंच दर्पणे प्रतिमुखस्याभावे सप्रतिबिंबदर्पणसंबद्धदर्पणांतरे प्रतिबिंबस्यापि प्रतिबिंबं दृश्यते । तन्न स्यात् । किञ्च घटे तदवच्छिन्नाकाशस्येव दर्पणेऽविद्यायां च मुखाभासस्य चैतन्याभासस्य चाभावे कथं श्यामत्वदिकं प्रतिमुख एव संसारश्च जीव एवेति व्यवस्था । न हि श्यामत्वसंसारावुपाधिगतौ । न वोपाधावारोपितबिंबगतौ । किञ्च गगनं तारकितमितिवन्मुखं प्रतिबिंबितमिति प्रयोगप्रत्ययौ मुखस्य संजातप्रतिबिंबसंबंधविषयावेव । न त्वभेदविषयौ । प्रतिबिंबस्योपादानं तु अंधकारपरिवेषेंद्रचापादाविव स्पर्शहीनं रूपि किञ्चिद्द्रव्यं कार्यबलात्कल्प्यम् । न ह्यस्माकं तार्किकाणमिव नवैव द्रव्याणि । विस्तरस्तु न्यायामृते बिंबप्रतिबिंबादेर्द्रष्टव्यः । [यद्वा भोक्तृरहितसुखवज्ज्ञातृरहितज्ञानवत्प्रलये

व्यक्तिरहितघटत्वादिजातिवदतीतादौ ज्ञेयरहितज्ञाततावत्फलरहितनित्यनियोगवच्च जीवोऽप्युपाधिरहितप्रतिबिंबोऽस्तु । प्रतिध्वनिवत्प्रतिसूर्यवच्छायापुरुषवदिंद्रचापवच्च ।

'सोपाधिरनुपाधिश्च प्रतिबिंबो द्विधेयते ।
जीवः परस्यानुपाधिरिंद्रचापो यथा रवे'रिति श्रुतेः ।

न हि प्रतिध्वन्यादेः स्वधर्माधायकउपाधिरस्ति । न च हेतुमात्रमुपाधिः । अनादिप्रतिबिंबस्य जीवस्य तदनपेक्षणात् । न च प्रतिबिंबस्य बिंबेनेवोपाधिनापि निरूप्यत्वं नियतम् । प्रतिध्वन्यादावदर्शनात् । बिंबप्रतिबिंबभेदश्चान्यत्र समर्थितः ।] अत्र जीवानां विचित्रत्वादविचित्रब्रह्मप्रतिबिंबत्वं नेतिशंकायाः प्रवाहानाद्यदृष्टादिवैचित्र्योक्त्या निरासः । भक्तिपादे 'स्थानविशेषात्प्रकाशादिव'दित्यत्र तु विचित्रजीवानंदादिबिंबत्वाद्ब्रह्मानंदादेर्वैचित्र्यं स्यात् । बिंबवैचित्र्यं विना प्रतिबिंबानां स्वाभाविकवै[जलदर्पणसूर्यकांताद्युपाधिवैचित्र्येऽपि बिंबभूतमुखावैचित्र्ये प्रतिबिंबवै] चित्र्यादृष्टेरितिशंकायाः । न केवलमेतदधिकरणोक्तं प्रवाहानादृष्टादिवैचित्र्यमात्रं तत्र हेतुः । किंतूपाधेः स्वरूपानादिज्ञानभक्त्यादिवैचित्र्यं बिंबस्येश्वरस्य शक्तिविशेषश्च तत्र हेतुः । न ह्यादित्यस्येवान्यस्यापि सूर्यकांतादौ प्रतिबिंबोऽग्निं जनयति । न वा सूर्यस्यैव जलादौ स तं जनयतीति निरास इति भेदः । अत एवात्र भाष्यादावदृष्टवैचित्र्यमेवोक्तम् । तत्र तु 'ऐश्वर्यात्परमाद्विष्णोर्भक्त्यादीनामनादित' इतीश्वरशक्तिः स्वरूपानादिभक्त्यादिवैचित्र्यं चोक्तम् । टीकायामपि 'न चादृष्टनियमेन वैचित्र्यम् । स्वाभाविकानंदादेरादिमत्कारणानुपपत्ते'रित्यादिनात्रोक्तमदृष्टवैचित्र्यं तत्र पूर्वपक्ष एवाशंक्य परिहृतम् ।

अत्र यदुक्तं परैः अदृष्टेत्यादिसूत्रत्रयेण किं त्वनेकात्मवादिसांख्यादिमत एवाव्यवस्थेत्युच्यत इति तन्न । मम रीत्या 'अदृष्टानियमा'दिति हेतोः 'आभास एव चे'ति श्रुतसाध्यान्वयसंभवे सांख्यादिमतेऽव्यवस्थेति साध्याध्याहारायोगात् । आत्मभेदे न व्यवस्था । ऐक्ये तु व्यवस्थेत्यस्य विरुद्धत्वाच्च । विस्तृतं चैतदन्यत्रेति । अस्मिन् पाद आद्य-

मधिकरणत्रिकमुत्पत्त्यनुत्पत्तिश्रुत्योर्विरोधनिरासकत्वेनैका पेटिका । तत्राद्ये द्वितीये च ब्रह्मेतरयोर्नभो नभस्वतोरुत्पत्त्या सिद्धांतः । तृतीये तु ब्रह्मणोनुत्पत्त्या सिद्धांत इति भेदः । चतुर्थपंचमषष्ठानि तेज आदेरुत्प-[त्तावप्युत्प]त्तिं स्वीकृत्योत्पाद्योत्पादकभावरूपसंबंधविषयकविरोधे शंकिते तन्निरासकत्वेनैका पेटिका । तत्राप्याद्यद्वितीययोरुत्पादकविशेष-विषयविरोधनिरासेन सिद्धांतः । तृतीय उत्पाद्यविशेषविषयविरोध-निरासेन सिद्धांत इति भेदः । सप्तमाष्टमनवमदशमानि संहारविषय-विरोधनिरासकत्वेनैका पेटिका । तत्राप्याद्ये संहर्तृविषयविरोधनिरासः । द्वितीये तृतीये च संहारक्रमविरोधनिरासः । चतुर्थे ब्रह्मविषयकसंहार-विरोधपरिहारः । एकादशमारभ्यैकोनविंशतिपर्यंतानि जीवविषयत्वे-नैका पेटिका । तच्चाधिकरणनवकं यथाक्रमं जीवस्य सादित्वाणुत्वानेक-देहस्थितत्वेश्वरभिन्नत्वानंतत्वज्ञानानंदादिरूपत्वपरतंत्रकर्तृत्वेश्वरांशत्व-तत्प्रतिबिंबत्वरूपप्रमेयनवकप्रतिपादकमिति द्रष्टव्यम् ॥

॥ इति अदृष्टाधिकरणम् ॥ १९ ॥

इति श्रीमद्ब्रह्मण्यतीर्थपूज्यपादानां शिष्येण व्यासयतिना
विरचितायां श्रीमद्भाष्यटीकाविवृतौ

## तात्पर्यचंद्रिकायां द्वितीयाध्यायस्य तृतीयः पादः ॥ २ ॥ ३ ॥

॥ श्रीकृष्णार्पणमस्तु ॥

---

॥ श्रीः ॥

श्रीमद्ब्रह्मण्यतीर्थपूज्यपादशिष्यश्रीमद्व्यासमुनिविरचिता

# तात्पर्यचन्द्रिका

## द्वितीयाध्यायस्य चतुर्थः पादः

॥ श्री गुरुभ्यो नमः हरिः ॐ ॥

श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥

### अथ प्राणोत्पत्त्यधिकरणम्

### ॥ ॐ तथा प्राणाः ॐ ॥

अत्रोक्तं ब्रह्मणः सर्वस्रष्टृत्वं किं प्राणानादित्वश्रुतिविरुद्धं नवेति चिन्ता। तदर्थं किं प्राणानादित्वश्रुतिर्मुख्यार्थोत गौणीति। तदर्थमनादित्वश्रुतिसहकारित्वेन स्मृत्युक्तानुपादानत्वं किं सर्वथा निरुपादनत्वं किं वा सूक्ष्मरूपेणेति। 'प्रतिज्ञानुपरोधाच्चे'तिसिद्धांतसूत्रोक्ताया 'इदं सर्वमसृजते'ति सामान्यश्रुतेर्बाधाय पूर्वपक्षन्यायविवरणे स्पष्टार्थवद्विशेषश्रुतिविरोध इत्युक्तम्। तत्र सामान्यव्यवधानाभावरूपं स्पष्टार्थत्वं निरवकाशत्वरूपविशेषश्रुतित्वेपि हेतुरित्याह। स्पष्टार्थायानिरवकाशत्वेनेति ॥

'एतस्माज्जायते प्राणो मनः सर्वेंद्रियाणि चे'तिसिद्धांतीयविशेषश्रुतिबाधार्थं भाष्योक्तां पूर्वपक्षयुक्तिमाह ॥ निरुपादानत्वादिति ॥ व्यतिरेकेणेति ॥ यद्यप्यन्वयदृष्टांतो ब्रह्मास्ति। तथापि व्यतिरेकव्याप्तिं विना व्यभिचारशंकाया अनिरासाद्भाष्योक्तस्मृत्यनुसारेण व्यतिरेक एवोक्तः ॥ विप्रतिपत्त्यभावेनेति ॥ तेजोऽस्त इत्यादौ तेज आदेर्ब्रह्मकार्यत्व इव प्रकृते तत्र विप्रतिपत्त्यभावेनेत्यर्थः। प्रतिसृष्टिकालमिति ॥ यस्मिन् प्रलयकालेनुपचयस्तदा न समर्थानि यस्मिंस्तु सृष्टिकाले समर्थानि तदाऽस्त्येवोपचय इत्यर्थः। इन्द्रियाणां भूतैरुपचये तैजसाहंकारकार्यत्वविरोध

इत्यत आह ॥ अत्राहंकारेति ॥ ननु तथापि तामसाहंकारकार्याणां भूतानां कथं भाष्योक्तश्रुतौ प्राणकारणत्वोक्तिरित्यत आह ॥ अहंकारोत्पन्नेति ॥ उक्तयुक्त्यापीति ॥ 'युक्तियुक्ताया अप्यविशेषश्रुतेस्सकाशादुभय (विशेषश्रुतेस्सकाशादुभय) ' श्रुतेः प्रबल्या'दिति न्यायविवरणोक्तरीत्या 'स प्राणमसृजत स प्राणा'नित्यादिसिद्धांतीयविशेषश्रुतेः पूर्वपक्षीयविशेषश्रुतितः प्राबल्यार्थं पूर्वोक्ता सामान्यश्रुतिः स्मारितेति भावः ॥

॥ इति प्राणोत्पत्त्यधिकरणम् ॥ १ ॥

---

## अथ तत्प्रागधिकरणम्

## ॥ ॐ तत्प्राक्श्रुतेश्च ॐ ॥

अवांतरसंगतिं सूचयितुं प्रकृतेन्द्रियांतर्गतमित्युक्तम् । अत्रोक्तं ब्रह्मणः सर्वस्रष्टृत्वं मनोनादित्वश्रुतिविरुद्धं न वेति चिन्ता । तदर्थं मनोनादित्वश्रुतिर्मुख्यार्थोत गौणीति । तदर्थं गौणत्वइन्द्रियांतराणामनित्यत्वमुक्त्वा मनसो नित्यत्वोक्तिर्युक्ता न वेति । तदर्थं मनसः सृष्टिकाले किमिन्द्रियांतराणामिव बह्ववयवोपचयः किं वाल्पावयवोपचय इति । 'विशेषश्रुतिविरोध' इति पूर्वपक्षन्यायविवरणे पूर्वाधिकरण इव विशेषश्रुतिर्न विशिष्यधर्मिनिर्देशमात्रम् । 'एतस्माज्जायते प्राणो मन' इति सादित्वेपि तस्य सत्त्वात् । 'प्राणा एवानादय' इतींद्रियेष्वपि तस्य सत्त्वेन पूर्वाधिकरणसांकर्यापाताच्च । असांकर्यस्य च 'तत्र स्पष्टार्थवच्छ्रुतिः । विशेषश्रुतिवैरूप्य'मित्याद्यनुव्याख्यान उक्तत्वात् । किंत्विंद्रियांतराण्यनित्यकोटौ निक्षिप्य मनसो नित्यत्वोक्तिरित्याह । इन्द्रियाणामनित्यत्वमिति ॥ 'विशेषश्रुते'रिति सिद्धांतन्यायविवरणे विशेषश्रुतिर्न पूर्वपक्ष इवेंद्रियांतराणि नित्यकोटौ निक्षिप्य मनसोऽनित्यत्वोक्तिः । विषयवाक्ये तदभावात् । इन्द्रियांतराणां नित्यकोटिनिवेशस्य सिद्धांतविरोधित्वाच्च । किन्तु पृथक्कीर्तनमात्रम् । तावता निरवकाशत्वसिद्धेरित्याह ।

पृथङ्मनस इति ॥ अनेन सौत्रस्य प्राक्शब्दस्य न केवलं मनोविषय-सूचनं फलम् । किन्तु श्रुतेर्निरवकाशत्वसूचनमपीत्युक्तं भवति । तस्य फलांतरमप्याह ॥ नचेति ॥

॥ इति तत्प्रागधिकरणम् ॥ २ ॥

---

## अथ तत्पूर्वकत्वाधिकरणम्

## ॥ ॐ तत्पूर्वकत्वाद्वाचः ॐ ॥

अत्रोक्तं ब्रह्मणः सर्वस्रष्टृत्वं किं वाङ्मित्यत्वश्रुतिविरुद्धं नवेति चिंता । तदर्थं वाङ्मित्यत्वश्रुतिर्मुख्यार्थोत गौणीति । तदर्थं गौणत्वे ' अस्यां हि श्रुति-रवतिष्ठत ' इति श्रुतं नित्यवेदाश्रयत्वमयुक्तमुत युक्तमिति । तदर्थं वेदाश्र-यत्वं किं वेदोच्चारणसामर्थ्यं किं वा तत्सन्निधियोग्यतेति । सामर्थ्यरूपत्वे सदा वेदोच्चारणसमर्थस्य वागिंद्रियस्योपचयकल्पनं व्यर्थमिति नित्यत्व-श्रुतिर्मुख्यार्था । अन्यथा तु गौणी । ' नच विशेषश्रुतिविरोध ' इति पूर्वपक्षन्यायविवरणे विशेषश्रुतिर्नाम नाद्याधिकरण इव विशिष्यधर्मि-निर्देशमात्रम् । तत्सांकर्यात् । नापि द्वितीय इवान्येषामनित्यत्वोक्तिः । तत्सांकर्यादेव । भाष्योक्ते ' नित्यये'त्यादिविशेषवाक्ये तदभावाच्च । किन्तु निरवकाशवाक्यशेषसाहित्यमपीत्याह । वाक्यशेषादिति ॥ ' विशेषश्रुते- ' रिति सिद्धांतन्यायविवरणे पूर्वाधिकरणयोरिव विशिष्यकीर्तनमात्रं न विवक्षितम् । किन्तु निरवकाशवाक्यशेषसाहित्यमपीत्याह । पूर्ववाक्य-बलेनेति ॥ उपलक्षणं चैतत् । ' मनसो वागुदपद्यत वाचोव्याहरण'मिति न्यायविवरणोक्तश्रुतिस्थोत्तरवाक्यबलेनेत्यपि ग्राह्यम् । मनसः सकाशा-दिति ॥ ' उत्पत्तिर्मनस ' इति भाष्योक्तस्मृतौ मनस इति पञ्चमी । नतु षष्ठीत्यर्थः । ननु वाचो नित्यत्वं नित्यवेदाश्रयत्वेनैव । नतु स्वरूपेण । वाक्यशेषे तदाश्रयत्वोक्तेः । अनित्यत्वं तु नानित्यपुराणाद्याश्रयत्वेन । किन्तु स्वरूपेणैव । वाक्यशेषे तदाश्रयत्वानुक्तेरिति तटस्थशंकां निरस्यति ।

एवञ्च समाख्यानुरोध इति ॥ समाख्याश्रुतौ 'अनित्यावावस्मृतय' इति वागिंद्रियाश्रितस्मृतीनामनित्यत्वोक्तेरिहापि तदाश्रयत्वेनैवानित्यत्वं विवक्षितम् । नतु स्वरूपेणेत्यर्थः । अन्यथेति ॥ स्वरूपेणैव नित्यत्वानित्यत्वविवक्षायां विरोधात् स्वरूपेण नित्यत्वमुपचितांशैरनित्यत्वमिति विवक्षायां च वाक्यशेषादौ नित्यवेदाश्रयत्वाद्युक्त्ययोगात् वाक्शब्देन वेदविवक्षायां च 'अस्यां हि श्रुतिरवतिष्ठत' इति वाक्यशेषविरोधात् अन्यथा वाक्यार्थो न युक्त इत्यर्थः । अन्येतु 'तथे'त्यादीनि 'तत्पूर्वकत्वा'दित्यंतानि सूत्राण्येकमधिकरणम् । तत्र प्राणा अनादयः । 'तत्तेजोसृजते'ति छांदोग्ये सृष्टिप्रकरणे प्राणानां जन्माश्रवणात् । नचैवं वियदाद्यधिकरणैर्गतार्थता । 'असद्वा इदमग्र आसीत्तदाहुः किं तदसदासीदिति ऋषयो वाव ते अग्रे असदासीत् तदाहुः के ते ऋषय इति प्राणा वाव ऋषय' इति जगदुत्पत्तेः प्राक्प्राणानां सत्त्वश्रुतेरिहाधिकत्वादिति प्राप्ते 'एतस्माज्जायते प्राणो मनः सर्वेंद्रियाणि च । खं वायुर्ज्योति'रित्यादौ जन्म श्रवणात् 'असद्वा' इत्यादेश्चावांतरप्रलयपरत्वात्सादय इति सिद्धान्त इत्याहुः । तन्न । एतस्मादिति श्रुतावुत्पत्तौ श्रुतायामपि क्वचिदश्रवणमात्रेण पूर्वपक्षानुदयात् । आकाशवाय्वादिष्वपि 'वायुश्चांतरिक्षंचैतदमृतं आपो वा इदमग्र आसु'रिति श्रवणेनेह ततोधिकाशंकाभावाच्च । तत्रामृतत्वाग्रत्वयोरापेक्षिकत्व इहाप्यग्रत्वं तथास्तु । तत्रापूशब्दस्य ब्रह्मणि समन्वय इहापि प्राणादिशब्दस्य सोस्तु । मम तु भाष्योक्तश्रुतौ स्मृतौ च प्राणानां भूतकारणत्वोक्तिरुपादाननिषेधश्च भूतेभ्योधिक इति पूर्वपक्षोदयः । किञ्च प्राणानां स्वरूपेण सादित्वसिद्धांतो 'नित्यान्येतानिसौक्ष्मेणे'त्यादिभाष्योक्तस्मृतिविरुद्धः ।

यच्चोक्तं उत्पत्तिश्रुतिर्नामुख्यार्था । गौणत्वासंभवादिति 'गौणी'ति सूत्रार्थ इति । तन्न । मम रीत्या वियदधिकरणस्थेन 'गौणी'ति सूत्रेणेवात्रत्येनापि तेनावश्यवक्तव्यस्यानादित्वश्रुतिर्गौणीत्यस्यार्थस्य प्रतिज्ञाध्याहारादिकं विनैवोक्तिसंभवे उत्पत्तिश्रुतेर्गौणत्वस्यासंभवादित्यस्यार्थस्य नामुख्यार्थेति प्रतिज्ञाध्याहारेणाश्रुतसमस्तावयवषष्ठीकल्पनादिना चोक्त्ययोगात् ।

प्रतिज्ञानुपरोधादितिसूत्रं तु परमते नास्त्येव। यच्चोक्तं 'एतस्मा'दिति वाक्य आकाशादिभ्यः प्राचीनेषु प्राणादिषु श्रुतं 'जायत' इत्येकमेव पदमुत्तरस्मिन्नाकाशादावप्यनुवर्तते। आकाशादेश्च मुख्यमेव जन्मेति प्राणानामपि तथा। सकृत्प्रयुक्तस्य 'जायत' इति पदस्य वृत्तिद्वयायोगादिति तदिति सूत्रार्थ इति। तन्न। मम रीत्या सौत्रस्य तच्छब्दस्य 'तथा-प्राणा' इति पूर्वसूत्रनिर्दिष्टप्राणपरतया तथा इन्द्रियोत्पत्त्यनुत्पत्तिश्रुतिविरोधनिरासानंतरमधिकाशंकयोत्थितस्यैंद्रियविशेषमनोनित्यत्वानित्यत्व - श्रुतिविरोधस्यावश्यनिरसनीयस्य निरासेन चाधिकरणांतरत्वसंभवे तच्छब्दस्य पूर्वसूत्रानिर्दिष्टाकाशादिपरतया मुख्याबाधेनैवागौणत्वसिद्धेरवश्यावक्तव्यस्य गौणत्वे बाधकस्योक्त्या च पूर्वशेषत्वायोगात्। सर्वाणि भूतानि व्युच्चरंतीति श्रुत्यंतरे श्रुतस्य व्युच्चरंति शब्दस्य पूर्वैः प्राणादिभिरपि संबन्धांगीकारेण तत्संग्रहार्थं तत्सहश्रुतेश्चेत्येव सूत्रणीयत्वेन 'तत्प्राक्श्रुतेश्चे'तिसूत्रणायोगाच्च। मम मते तु प्राक्शब्देनैव मनसो लाभात्सूत्रे मनःपदाभावः। तथाधिकरणांतरत्वेपि भाष्योक्तरीत्यानुक्तसमुच्चयार्थश्चशब्दश्च युक्तस्स्यात्। यच्चोक्तं 'यत्रापि छांदोग्ये प्राणानामुत्पत्तिरनुक्तेति ब्रूषे तत्राप्युक्तेति ब्रूमहे। यतोस्मिन्नेव प्रकरणे अन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वागिति वागादीनां तेज आदिपूर्वकत्वा'दिति 'तत्पूर्वकत्वा'दिति सूत्रार्थ इति तन्न। मम रीत्या सूत्रस्थतच्छब्दस्य पूर्वसूत्रप्रकृतमनःपरत्वं, वाक्शब्दस्य केवलवाक्परत्वं चाश्रित्य साधारणज्ञानेंद्रियमनोनित्यत्वानित्यत्वश्रुतिविरोधपरिहारेभ्यधिकाशंकयोत्थितस्या - साधारणकर्मेंद्रियवाङ्नित्यत्वानित्यत्वश्रुतिविरोधस्यावश्यनिरसनीयस्य निरासेनाधिकरणांतरत्वसंभवे तच्छब्दस्य पूर्वप्रकृततेजोबन्नपरत्वं वाक्शब्दस्य वाक्प्राणमनोलक्षकत्वं चाश्रित्यावश्यावक्तव्यस्याहंकारिकाणां मनआदीनां प्रत्यहमन्नादिभिराप्यायनस्योक्त्या पूर्वशेषत्वायोगात्। न हि वायुविकारस्य प्राणस्याग्निद्वारा वायुकार्यांच्चापूकार्यत्वं युक्तम्।

केचित्तु यथा जीवोऽनादिस्तथा प्राणा अप्यनादयः। 'प्राणा वाव ऋषय' इति श्रुतेरिति 'तथे'तिसूत्रेण पूर्वपक्षस्य तत्र प्राणशब्दो ब्रह्म-

परः । बहुवचनश्रुतिस्तु गौणी । ब्रह्मणि बहुत्वासंभवादिति 'गौणी'त्यादि सूत्रैः सिद्धांतितमित्याहुः । तन्न । जीवानुत्पत्तेर्वियदाद्युत्पत्तेश्च बहुव्यवधाने समानेपि जडेषु प्राणेष्वभ्यर्हितस्योत्पत्तिमत्त्वेन वियदादिजडसाम्यस्योक्त्या सिद्धांतत्वसंभवे उत्तरत्रसिद्धांतद्योतकतुशब्दादेरभावे च 'तथे'तिसूत्रस्य पूर्वपक्षत्वायोगात् । ननु जीवानुत्पत्त्यनंतरस्य जीवाणुत्वादेः प्रासंगिकत्वादव्यवधायकत्वमिति चेन्न । जन्मादिसूत्रनिर्वाहकवियदाद्युत्पत्त्यनंतरस्य तदनिर्वाहकस्य जीवानुत्पत्त्यादेरपि प्रासंगिकत्वात् । प्राणा वाव ऋषय इति वाक्ये बहुत्वस्य गौणत्वेपि प्राणा एवानादय इति प्राणानादित्वश्रुतेर्गौणत्वं विनोत्पत्त्यसिद्ध्या 'गौणी'तिसूत्रेनादित्वश्रुतिगौणीत्येव वक्तव्यत्वाच्च । यच्चोक्तं तस्यैव ब्रह्मणस्सृष्टेः प्राक्श्रुतेर्ब्रह्मैव प्राणशब्दार्थ इति 'तत्प्रा'गिति सूत्रार्थ इति तन्न । सौत्रस्य तच्छब्दस्य पूर्वसूत्रनिर्दिष्टावश्यवक्तव्यप्राक्त्वावधिभूतेंद्रियपरत्वसंभवे तदप्रकृतावश्यावक्तव्यप्राक्त्वानवधिरूपब्रह्मपरत्वायोगात् । सृष्टेः प्राक्कालकर्मजीवप्रकृत्यादिवत्पूर्वपक्षे प्राणानामपि सत्त्वसंभवेन ब्रह्मण एवेत्यवधारणायोगाच्च । यच्चोक्तं 'अतश्च प्राणशब्दो ब्रह्मपरः । वाचो ब्रह्मान्यविषयस्य नामधेयस्य वाग्विषयभूतवियदादिसृष्टिपूर्वकत्वा'दिति 'तत्पूर्वकत्वा'दिति सूत्रार्थ इति । तन्न । सौत्रस्य तच्छब्दस्य पूर्वसूत्रप्रकृतमनःपरत्वसंभवे तदप्रकृतवियदादिपरत्वस्य, वाक्शब्दे संकुचितार्थत्वस्य चायोगात् । प्राणा वा अनादय इति पूर्वश्रुताऽनादिशब्दस्यानादिविषयनामधेयस्य वा सृष्टिपूर्वकत्वोपपत्तेश्च ॥

॥ इति तत्पूर्वकत्वाधिकरणम् ॥ ३ ॥

---

## अथ सप्तगत्यधिकरणम्

## ॥ ॐ सप्तगतेर्विशेषितत्वाच्च ॐ ॥

प्राणानां धर्मितामाश्रित्योत्पत्तिश्चिंतिता । अथ संख्यारूपधर्माश्रयस्तद्विशेषश्चिंत्यत इति संगतिः । अत्र ब्रह्मणः श्रुतिसमन्वयेनोक्तं गुण-

पूर्त्यादिकमयुक्तं नवेति चिंता । तदर्थं श्रुतिरप्रमाणमुत प्रमाणमिति । तदर्थं प्राणेषु सप्तत्वद्वादशत्वश्रुती परस्परविरुद्धे उत नेति । तदर्थं प्राणानां द्वादशत्वेपि सप्तत्वश्रुतिर्न घटत उत घटत इति । तदर्थं द्वादशत्वसप्तत्वसंख्यावच्छेदकं नास्त्युतास्तीति । सोमस्य ग्रहाः सोमरसग्रहणार्थाः पात्रविशेषाः । ज्योतिष्टोमे हि उपांश्वंतर्यामैंद्रवायवमैत्रावरुणाश्विनाः पंच शुक्रामंथिनौद्वौ ऋतुपात्रेद्वे अतिग्राह्यास्त्रय इति सोमग्रहा द्वादश । यद्यप्यंश्वदाभ्यावपि ग्रहौ तत्र स्तः । तथापि तयोरनित्यत्वात्सादनोपस्थापनाद्यभावाच्च नित्यसादनादियुक्तग्रहविवक्षया द्वादशत्वमिति द्रष्टव्यम् । अत्र 'श्रुत्योरेव परस्परविरोध' इति न्यायविवरणउभयाप्रामाण्येन पूर्वपक्षितत्वाट्टीकायामपि 'सप्तैव प्राणा' इत्यादिना 'अथवा द्वादश प्राणा' इत्यादिना च सप्तत्वद्वादशत्वश्रुत्योः समबलत्वोक्त्या परस्परव्याघात इत्येक एव पूर्वपक्षो दर्शितः । तदनुसारेण संदेहटीकापि किं सप्तोत द्वादशेत्यनिर्णय उत द्वादशेति निर्णय इत्यध्याहारेण योज्या ॥ एकदैवत्याभिप्रायेणेति ॥ समसंख्यदेवताकत्वाभिप्रायेणेत्यर्थः । द्वादशमासादीनां हि द्वादशादित्यादयो देवताः । ननु निवृत्तकर्मणः संसारस्थित्यहेतुत्वात् अब्रह्मज्ञानस्य च तस्मादुद्गत्यहेतुत्वात्तयोः कथं स्थितगतिशब्दावत आह ॥ सजातायत्वेनान्यत्रापीति ॥ यथा 'यत्प्रपदाभ्यां प्रापद्यत ब्रह्मेमं पुरुषं तस्मात्प्रपदे' इति श्रुत्युक्तस्य प्रपदशब्दनिमित्तस्य चतुर्मुखपादतलोपरि भागगतत्वेपि तज्जातीयपुरुषांतरसंबंधिन्यपि तस्मिन्प्रपदशब्दस्तथेह प्रवृत्तकर्मणः संसारस्थितिहेतुत्वाद्ब्रह्मज्ञानस्य च तस्मादुद्गतिहेतुत्वात्सजातीययोः कर्मांतरज्ञानांतरयोरपिस्थितगतिशब्दावित्यर्थः ।

अन्येतु प्राणाः सप्तैव । 'सप्त प्राणा' इत्यादिश्रुतिषु सप्तत्वावगतेः । 'सप्तवैशीर्षण्याः प्राणा' इति विशेषितत्वाच्चेति 'सप्ते'ति सूत्रेण पूर्वपक्षयित्वा 'दशेमे पुरुषे प्राणा आत्मैकादश' इतिश्रुतेरेकादशेति 'हस्ते'तिसूत्रेण सिद्धांतितम् । अक्षरार्थस्तु हस्तादयोपि प्राणाः संति । अतोस्मिन् प्राणानामेकादशत्वे स्थिते सत्येवं सप्तत्वं नेतीत्याहुः ।

तन्न । मम रीत्या प्राणानां सप्तभ्योधिकसंख्यत्वे 'सप्त प्राणा' इति श्रुतिरयुक्ता । महासंख्यायामवच्छेदकविशेषं विनाल्पसंख्याव्यवहारायोगादिति शंकिते घ्राणरसनचक्षुस्त्वक्श्रोत्रमनोबुद्धिषु ज्ञानेंद्रियत्वरूपो विशेषो 'गुहाशया'मितिवाक्यसूचितोस्तीत्यवश्यवक्तव्यपरिहारोक्त्या 'सप्ते'तिसूत्रस्य सिद्धांतत्वसंभवे परिहारोक्तिसूचितपूर्वपक्षपरत्वायोगात् । श्रौतावगतिवाचिना सौत्रेणागतिशब्देनैव 'सप्त प्राणा 'इत्यस्या इव 'सप्तवैशीर्षण्याः प्राणा' इत्यस्या अपि श्रौतावगतेर्वक्तुं शक्यत्वेन 'विशेषितत्वाच्चे'त्यस्य वैयर्थ्याच्च । किञ्च सप्त वै शीर्षण्याः प्राणाद्वाववांचा 'विति समाख्याश्रुतौ प्राणानां नवत्वोक्त्या न तया सप्तत्वसिद्धिः । किञ्च सिद्धान्ते ब्रह्ममुख्यप्राणादेरपि प्राणशब्दार्थत्वेन तत्रैकादशत्वनियमायोगादिंद्रियेष्वेव स वाच्य इति पूर्वपक्षेपि तेष्वेव सप्तत्वनियमो वाच्यः । नच द्वे श्रौत्रे द्वे नासिके द्वे चक्षुषी एका वागितिश्रोत्रादिचतुरिंद्रियाधिष्ठानगोलकानां सप्तत्वइंद्रियेषु तत्सिद्ध्यति । हस्तेति सूत्रेपि हस्तादयोप्यतो नैवमित्येतावतैव पूर्णत्वात् 'स्थितेत' इति शब्दो व्यर्थः । किञ्च हस्तादयः पंच पूर्वपक्ष्युक्तसप्तांतर्गता एव चेन्न पूर्वपक्षनिरासः । अतिरिक्ताश्चेद्द्वादशत्वेनैव सिद्धांतो वाच्यो न त्वेकादशत्वेन । नच वाक् षट्ज्ञानेंद्रियाणि चेति सप्त 'सप्ते'तिसूत्रे विवक्षितानि । हस्तेतिसूत्रे तु चत्वारिवागन्यकर्मेंद्रियाणि । तथा चैकादशत्वमिति वाच्यम् । मम मते सप्तसु ज्ञानेंद्रियत्ववत्, हस्तादिषु कर्मेंद्रियत्ववच्च त्वन्मत एकस्यावच्छेदकस्याभावेनादिसूत्रे सप्तशब्दस्य, द्वितीयआदिशब्दस्य चायोगात् । गीयते च प्राणानां द्वादशत्वं 'इंद्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः । मनसस्तु परा बुद्धिः । इंद्रियाणि हयानाहुः । बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च । यदा पंचावातिष्ठन्ते ज्ञानानि मनसा सह । बुद्धिश्च न विचेष्टते । द्वादश वा एते प्राणाः । द्वादशैवेंद्रियाण्याहुर्मनोबुद्धी तु द्वादशे ' इत्यादिश्रुतिषु

विज्ञानतत्वाच्च मनो मनस्तत्वाच्च खादिकम् ।
सप्त प्राणास्त्ववगतेः पंच प्राणाश्च कर्मणः ।

श्रोत्रादीनि तु पंचैव तथा वागादिपंचकम् ।

मनोबुद्धिसहायानि द्वादशैवेंद्रियाणित्वि'त्यादिस्मृतिषु च यद्यपि 'दशेमे पुरुषे प्राणाआत्मैकादश' इत्यादिश्रुतिषु 'इंद्रियाणि दशैकं चे'त्यादिस्मृतिषु चैकादशत्वं च बुद्धिमनसोरभेदाश्रयणेनैवोच्यते। तथापीह सूत्रे ज्ञानेंद्रियाणि सप्तोक्त्वा पुनः पंच कर्मेंद्रियोक्तेर्भेदेन द्वादशत्वं विवक्षितम्। एतेन यत्परैः सूत्रयोर्योजनांतरमुक्तं प्राणनामेकादशत्वेपि सप्तैवोत्क्रामंति। 'सर्वे प्राणा अनूत्क्रामंती'त्यत्र सप्तानामेव गत्युक्तेः। तत्र सर्वशब्दश्रवणेपि 'न पश्यतीत्याहु'रित्यादौ 'न स्पृशती'त्यंते पूर्ववाक्ये चक्षुर्घ्राणरसनवाक्श्रोत्रमनस्स्पर्शनानामेव विशेषितत्वादिति 'सप्ते'तिसूत्रेण पूर्वपक्षिते 'दशेम'इति वाक्ये ते यदास्माच्छरीरान्मर्त्यादुत्क्रामंती'ति श्रवणादेकादशाप्युत्क्रामंतीति हस्तेति सूत्रेण सिद्धांतितमिति तदपि निरस्तम्। उक्तरीत्या 'सप्ते'ति सूत्रस्याध्याहारं विनैव सिद्धांतत्वसंभवउत्क्रामंतीत्यध्याहारायोगात्। पूर्ववाक्येनान्यपरेण पूर्वपक्षायोगाच्च। एतेन यत्कैश्चिदुक्तं सप्तैव प्राणाः। 'येषु चरंति प्राणा गुहाशयां निहिताः सप्तसप्ते'तिश्रुतौ सप्तानामेव गत्युक्तेरित्याद्यसूत्रेण पूर्वपक्षिते हस्तेति सिद्धांतितमिति तन्निरस्तम्। उत्तरसूत्रेस्थितपदवैयर्थ्यात्॥ ॥ इति सप्तगत्यधिकरणम्॥ ४॥

---

## अथ अण्वधिकरणम्

## ॥ ॐ अणवश्च ॐ ॥

पूर्वत्र प्राणानां संख्या विचारिता। तदनंतरं परिमाणं विचार्यत इति संगतिः। अत्र ब्रह्मणः श्रुतिसमन्वयेनोक्तं गुणपूर्त्यादि किं न युक्तमुत युक्तमिति चिंता तदर्थं किं प्राणाणुत्वश्रुतिरप्रमाणमुत नेति। तदर्थं किं प्राणाणुत्वश्रुतिः प्रबलव्याप्तिश्रुतिबाधितोतनेति। तदर्थं किं व्याप्तिश्रुतिः स्वरूपव्याप्तिपरोत प्रकाशव्याप्तिपरेति। भाष्योक्तां युक्तिमाह ॥ अति-

सुदृढं हीति । न्यायविवरणोक्तां तामाह ॥ किंचेति ॥ मानाभावादिति ॥ स एवायंशब्द इत्यादिबुद्धिबाधाच्चेत्यपि ग्राह्यम् ॥ श्रोत्रस्यैव गमनोपपत्तेरिति ॥ क्वचिच्छब्दादौ देशसंदेहस्तु रूपादाविव दोषबलाद्युक्तः । ब्रह्मभाषितादीनामग्रहणमपि ब्रह्मरूपादीनामग्रहणवद्युक्तम् । यथाहि चक्षुषो गमनं कार्यानुसारेण संकुचितं कल्प्यते तथा श्रोत्रस्यापीति भावः । अन्यत्र घ्राणाद्यारंभे ।

अन्येतु सांख्यमतइंद्रियाणामाहंकारिकत्वादहंकारस्य च जगन्मंडलव्यातित्वात्सर्वगताः प्राणा इति पूर्वपक्षितवंतः । तन्न । श्रुत्योः परस्परविरोधनिरासकेस्मिन् पादे सांख्यस्मृतिविरोधनिरासस्यासंगतेः । त्वन्मते कारणस्य शुद्धस्याविद्यावच्छिन्नस्य वा ब्रह्मणोविद्याया वाऽनणुत्वेपि कार्यस्य मनसोनणुत्ववत्कारणस्याहंकारस्य व्यापित्वेपि कार्याणां प्राणानामव्यापित्वस्योपपत्त्या पूर्वपक्षानुदयाच्च ।

॥ इति अण्वधिकरणम् ॥ ५ ॥

---

## अथ श्रेष्ठाधिकरणम्

## ॥ ॐ श्रेष्ठश्च ॐ ॥

अत्र संगतिं सूचयति । सर्वप्राणप्रेरकः प्राणश्रुतिसन्निधापित श्चेति ॥ अत्रोक्तं ब्रह्मणस्सर्वस्रष्टृत्वं किं मुख्यप्राणानादित्वश्रुतिविरुद्धमुत नेति चिंता । तदर्थं तदुत्पत्तिश्रुतिः किं प्रबलानुत्पत्तिश्रुतिबाधितोत नेति । तदर्थमनुत्पत्तिश्रुतिः किं सर्वात्मनानुत्पत्तिपरोत स्थौल्येनोत्पत्तावपि सौक्ष्म्येणानुत्पत्तिपरेति । 'प्राणादिदमाविरासी'दिति श्रुतिशेषे भाष्यकारवचनसामर्थ्येन मुख्यप्राणलिंगकल्पनान्न परब्रह्मपरः प्राणशब्द इति पूर्वपक्षोदयः । एवमुत्तरत्रापि द्रष्टव्यम् । एतेन मातरिश्वे'त्यत्र बाह्येन मुख्यवायुरूपेणोत्पत्तिरुक्ता । इह तु अखिलमरणोत्पत्तिकारणेनाध्यात्मिकप्राणरूपेणाप्युत्पत्तिरुच्यत इति भेदः ।

यदुक्तमुभाभ्यां 'आनीदवात'मितिश्रुतौ महाप्रलये प्राणव्यापारभूताननश्रवणादिहाधिकाशंकेति। तन्न। 'कोह्येवान्या'दित्यादिश्रुतौ ब्रह्मण्यप्यननश्रवणादिह च 'अवात'मिति निषेधात्तेनाधिकाशंकायोगात्॥ ॥ इति श्रेष्ठाधिकरणम्॥ ६॥

---

## अथ चक्षुराद्यधिकरणम्

## ॥ ॐ चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ॐ ॥

पूर्वत्रोक्ता प्राणस्योत्पत्तिरिह पूर्वपक्षे स्वातंत्र्यादाक्षिप्यत इति संगतिः। अत्रोक्तं ब्रह्मणः सर्वस्रष्टृत्वादिकं किं मुख्यप्राणस्वातंत्र्यश्रुतिविरुद्धं नवेति चिंता। तदर्थं तत्पारतंत्र्यश्रुतिः किं प्रबलस्वातंत्र्यश्रुतिबाधितोत नेति। तदर्थं स्वातंत्र्यश्रुतिः किं मुख्येश्वराभिप्रायोतावांतरेश्वराभिप्रायेति। कर्तृप्रयोज्यत्वेति। सुषुप्तौ जीवप्रयत्नाभावे चक्षुरादीनां व्यापारादर्शनाज्जीवप्रयोज्यत्वम्। मुख्यप्राणस्य तु तदाव्यापारदर्शनात्तदप्रयोज्यत्वमिति भावः॥

॥ इति चक्षुराद्यधिकरणम्॥ ७॥

---

## अथ पञ्चवृत्त्यधिकरणम्

## ॥ ॐ पञ्चवृत्तिर्मनोवद्व्यपदिश्यते ॐ ॥

संगतिं सूचयति। मुख्यप्राणप्रसंगसंनिधापिता इति। अत्र श्रुतिसमन्वयेनोक्तं ब्रह्मणः सर्वस्रष्टृत्वादिकमयुक्तं नवेति चिन्ता। तदर्थं श्रुतिरप्रमाणमुत नेति। तदर्थं प्राणादेर्मुख्यप्राणस्वरूपत्वतद्दासत्वश्रुती किं परस्परविरुद्धे उत नेति। तदर्थं श्रुतिद्वयमप्येकप्राणादिविषयमुत भिन्नप्राणादिविषयमिति॥ तदाज्ञयाकर्मकारित्वादिति॥ प्राणादीनां कर्मणि

'प्राणापानाविडायां च पिंगलायां च वर्ततः।
व्यानः संधिषु सर्वत्र उदानो ब्रह्मनाडिगः।

सर्वत्रैव समानस्तु समं चरति सर्वगः'

इति भारतवचनाज्ज्ञेयानि। 'अतस्तदाश्रये'ति पूर्वपक्षभाष्ये मुख्यदासत्वे युक्त्युक्तेः, 'प्राणादिपञ्चकस्य व्यक्तसद्गुणत्वान्मुख्यप्राणवृत्तित्व'मिति न्यायविवरणे च मुख्यप्राणस्वरूपत्वे युक्त्युक्तेरुभयानुसरणाय 'एवं श्रुतिद्वयस्यापि समानबलत्वा'दिति टीकायां श्रुत्योः साम्येनानध्यवसायपूर्वपक्षो दर्शितः। चेतसोऽन्याप्तिश्चेतनेति॥ 'बहुस्मरणशक्तिस्तु चेतनेत्यभिधीयत' इति वचनम्।

यदुक्तमुभाभ्यां 'न वायु' इत्यादीनि 'अणुश्चे'त्यतः प्राचीनानि सूत्राण्येकमधिकरणम्। तत्र मुख्यप्राणो न वायुमात्रम्। नापि सांख्यरीत्या समस्तकरणक्रिया। 'एतस्माज्जायते प्राणो मन' इति श्रुतौ वायुकर्मशब्दाभ्यां तयोः प्राणात्पृथगुपदेशात्। किंत्वाध्यात्मिको वायुविकारविशेषो मुख्यप्राण इति न वाय्विति सूत्रार्थ इति। तन्न। सांख्यमतनिरासस्येहासंगतेः। किञ्च मम रीत्याऽवश्यनिरसनीयस्य पूर्वोक्तप्राणोत्पत्तिश्रुतेर्वाय्वादिपरत्वस्येह निरासेन 'नानुमानमतच्छब्दा'दित्यादेरिव च 'न वायु' इत्यस्य सूत्राक्षरानुसारेण पूर्वशेषत्वसंभवे प्राणसंवादादिना चेतनत्वेन निर्णीतमुख्यप्राणे जडत्वांगीकारेण वायुक्रियात्वपूर्वपक्षो वायुविकारत्वसिद्धांतश्चायुक्तः। न हि जडे श्रुतिषु क्वापि मुख्यप्राणशब्दो दृष्टः।

यच्चोक्तं परैः मुख्यप्राणस्य नामादीन् प्रति प्रधानत्वाच्छरीरे जीववत्स्वातन्त्र्यमिति प्राप्ते प्राणसंवादादिष्वप्रधानभूतचक्षुरादिभिः सह शासनादस्वातन्त्र्यमिति 'चक्षु'रिति सूत्रार्थ इति। तन्न। पूर्वसूत्रे वायुविकारत्वेन जडतया निर्णीतमुख्यप्राणे जीववत्कर्तृत्वशंकानुदयात्। प्राणसंवादादिना मुख्यप्राणस्योक्तजडत्वाक्षेपे च चक्षुरादीनामपि तेनैव तदाक्षेपसंभावनात्। सिद्धांते चक्षुरादिसाहचर्येणाचेतनत्वसिद्धौ सौत्रादिपदेनाचेतनत्वोक्तिरिति त्वन्मतहानेः। अनुपकारकत्वाशंकायाश्च स्पष्टेन दृष्टशास्त्रविरोधेनानुदयात्। दृश्यते ह्यन्वयव्यतिरेकाभ्यां चक्षुरादेरूपादि ज्ञानमिव प्राणस्य शरीरधारणाद्युपकारः। श्रूयते च प्राणसंवादादिषु।

अकरणत्वशंकायाश्च सिद्धांतप्रतिकूलत्वं च । सिद्धांतयिष्यते चोत्तरसूत्रेऽकरणत्वम् । यत्तु कैश्चिदुक्तम् प्राणो वायुविकारश्चेत्किमग्न्यादिवद्भूतांतरमिति शंकानिरासार्थं चक्षुरिति सूत्रमिति । तन्न । प्रत्यक्षादिविरोधेन प्राणे भूतांतरत्वशंकानुदयात् । विशेषहेत्वभावेनाग्न्यादिविकारस्य चक्षुरादेरपि तथात्वशंकानिरासापाताच्च ।

यच्चोक्तं परैः चक्षुरादिभिः सह शासनेन करणं चेत्प्राणस्तर्हि चक्षुरादिविषयरूपादिवदस्यापि विषयांतरं वाच्यम् । नच तच्छक्यम् । करणैकादशत्वव्याकोपदोष इति शंकानिरासार्थं सूत्रमकरणत्वादिति । प्राणस्याकरणत्वान्नायं दोषः । तथाहि दर्शयति 'तत्प्राणउत्क्रांतेपद्यते-'त्यादिकाश्रुतिः प्राणनिमित्तां शरीरस्थितिमित्यकरणत्वादिति सूत्रार्थ इति। तन्न । शरीरस्य कर्मेन्द्रियादीनां चोपकरणत्वेपि विषयाभावेन कार्यमात्रस्य शरीरकर्मेन्द्रियादाविव प्राणेपि प्रत्यक्षादिसिद्धत्वेन शंकानुदयात् । 'तथाहि दर्शगती'त्यस्य मम मत इव 'अकारणत्वाच्च न दोष' इति पूर्वोक्तार्थपरत्वाभावेनास्वारस्याच्च ।

यत्तु कैश्चिदुक्तं अकरणत्वादक्रियात्त्वाज्जीवं प्रत्युपकाररूपक्रियाविशेषराहित्याद्यो दोषः प्राप्नोति स नास्ति । तथाहि दर्शयति श्रुतिस्तत्प्राण इत्यादिकोपकारविशेषं शरीरधारणादिकमित्यकरणत्वादिति सूत्रार्थ इति । तन्न । स्फुटप्रत्यक्षादिविरोधेन चक्षुरादाविवानुपकारकत्वशंकानुदयस्योक्तत्वात् । पूर्वसूत्रस्थचक्षुरादिशब्दसन्निधानाद्बहुव्रीहितः कर्मधारयस्य बलवत्त्वाच्चाकरणत्वशब्देन प्रसिद्धकरणत्वाभावस्यैव प्रतीतौ बहुव्रीह्याद्याश्रयणेनोपकाररूपक्रियाविशेषराहित्यपरत्वकल्पनायोगाच्च। सिद्धांतसूत्रस्थाकरणत्वहेतोः स्वतःप्राप्तसिद्धांतहेतुत्वत्यागेन व्यवहितान्वयेन च पूर्वपक्षहेतुत्वकल्पनायोगाच्च ।

यच्चोक्तं परैः इतश्च मुख्यप्राणः कार्यविशेषवान् । यतः स उच्छ्वासादिव्यापारयुक्तप्राणापानादिपञ्चवृत्तिर्व्यपदिश्यते । यथा मनोयोगशास्त्रे प्रमाणविपर्ययविकल्पनिद्रास्मृतय इति पञ्चवृत्तीति पञ्चेति सूत्रार्थ इति । तन्न । सूत्रे चशब्दाभावेनहेत्वंतरत्वस्यास्वरसत्वात् । 'तथाहि दर्शयती'ति

पूर्वसूत्रभागेनैवास्यापि कार्यविशेषस्य वक्तुं शक्यत्वेनास्य वैयर्थ्याच्च। मम रीत्या श्रौतद्दार्ष्टांतिकस्य 'यथाह्वैनमःपञ्चधे'ति श्रुत्युक्तदृष्टांतस्य च संभवे 'एतेन योगः प्रत्युक्त' इत्यत्र निराकृतयोगशास्त्रोक्तदृष्टांतोक्त्ययोगाच्च ।

केचित्तु यथा कामादयोमनसोवृत्तिविशेषाः न तत्वांतरं तथा प्राणापानादयः प्राणस्य वृत्तिविशेषाः न तत्वांतरमिति पञ्चेति सूत्रार्थ इत्याहुः। तन्न । प्राणस्य प्राणवृत्तित्वायोगात् । 'कामः संकल्पो विचिकित्साश्रद्धाश्रद्धाश्रीर्धीर्भीरित्येतत्सर्वं मन एवे'तिश्रुत्या कामादीनामधिकत्वेन पञ्चवृत्तित्वेन मनसोदृष्टांतत्वायोगाच्च ॥

॥ इति पञ्चवृत्त्यधिकरणम् ॥ ८ ॥

---

अथ अण्वधिकरणम्

## ॥ ॐ अणुश्च ॐ ॥

पूर्वोक्ताधिकसद्गुणत्ववत्प्राणस्य विभुत्वमप्यस्त्विति पूर्वपक्षोदयात्संगतिः। अत्र श्रुतिसमन्वयेनोक्तं ब्रह्मणः सर्वस्रष्टृत्वादिकमयुक्तं नवेति चिंता । तदर्थं श्रुतिरप्रमाणमुत नेति । तदर्थं मुख्यप्राणस्याणुत्वश्रुतिरप्रमाणमुत नेति। तदर्थमणुत्वश्रुतिः प्रबलव्याप्तत्वश्रुतिबाधितोत नेति। तदर्थं व्याप्तत्वश्रुतिः किमांतरमुख्यप्राणरूपाभिप्राया किंवा बाह्यमुख्यवायुरूपाभिप्रायेति ।

अन्येतु 'समएभिस्त्रिभिर्लोकै'रिति प्राणस्य सर्वगतत्वश्रुतिराधिदैविकेन हिरण्यगर्भप्राणात्मना । आध्यात्मिकेन तु परिच्छिन्नत्वमित्याहुः। तन्न । हिरण्यगर्भस्य तद्बुद्धेर्वा परिच्छिन्नत्वेन सर्वगतत्वोक्त्ययोगात् ।

केचित्तु सर्वप्रवृत्तिहेतुत्वात्प्राणस्य सर्वगतत्वोक्तिरित्याहुः। तन्न। 'अंतर्वा अणुर्बहिर्महानितिश्रुत्युक्तसमाधौ सति मन आदि साधारणेन सर्वप्रवृत्तिहेतुत्वेन सर्वगतत्वोक्तेरयोगात् ।

॥ इति अण्वधिकरणम् ॥ ९ ॥

अथ ज्योतिराद्यधिकरणम्

## ॥ ॐ ज्योतिराद्यधिष्ठानं तु तदामननात् ॐ ॥

प्राणान्मुख्यप्राणं च निरूप्येह तेषां कं प्रति करणत्वमिति चिंत्यत इति संगतिः। अत्र श्रुतिसमन्वयेनोक्तं ब्रह्मणः सर्वस्रष्टृत्वादिकमयुक्तमुत नेति चिंता। तदर्थं किं श्रुतिरप्रमाणमुत नेति। तदर्थमिंद्रियाणां करणत्वाम्नानं जीवस्वामिकत्वाभिप्रायमुतेश्वरस्वामिकत्वेपि जीवं प्रति क्रियासाधनत्वमात्राभिप्रायमिति। [ब्रह्मकरणत्वश्रुतिरप्रमाणमुत नेति। तदर्थं सा प्रत्यक्षानुगृहीतप्रबलजीवकरणत्वश्रुतिबाधिता नवेति। तदर्थं जीवकरणत्वश्रुतिः करणानां जीवस्वामिकत्वाभिप्रायोतेश्वरस्वामिकत्वेपि जीवं प्रति क्रियासाधनत्वमात्राभिप्रायेति।] यदग्न्यादिरूपज्योतिराद्यधिष्ठातृ ब्रह्म तदेव तत्कार्यभूतचक्षुरादिरूपज्योतिराद्यधिष्ठानमिति सूत्रं योज्यमित्याह भाष्यकारः जीवेनैव करणैः कारयतीति॥ एवञ्च ब्रह्मप्रयोजकजीवकर्तृत्वाभ्यां चक्षुरादिकरणसंबंधित्वाच्छ्रुत्योरविरोध इति भावः।

अन्येतु वागादिकरणजातं स्वशक्त्यैवाभिवदनादिकारीति तात्ते अग्न्यादिभिरभिमानिदेवैरधिष्ठितमेव कार्यकारि। अग्निर्वाग्भूत्वामुखं प्राविशदित्याद्यामननादिति सिद्धांतयंति। तन्न। 'अभिमानिव्यपदेशस्त्वि'त्यत्रैवाभिमानिदेवतासमर्थनात्। त्वन्मते तस्य पूर्वपक्षसूत्रत्वेपि सिद्धांते तस्यानिरासेनानुमतत्वात्। यच्चोक्तमधिष्ठातृत्वेन देवतानां भोक्तृत्वं स्यादिति शंकानिरासार्थं 'प्राणवते'ति सूत्रमिति। तन्न। तस्य 'वैशेष्या'दित्युक्तन्यायेनाभिमानिसूत्रस्थविशेषशब्देनैव निराससंभवात्।

केचित्तु ज्योतिरितिसूत्रं प्राणेतिसूत्रं चैकीकृत्य प्राणवता जीवेन सह ज्योतिरादिदेवतानामिंद्रियविषयं यदधिष्ठानं तत्तदामननात्। परमात्मसंकल्पात्। 'य आत्मानमंतरो यमयति योग्निमंतरो यमयतीति-शब्दादिति सूत्रार्थ इत्याहुः। तन्न। परात्तु तच्छ्रुतेरित्यत्रैव 'य आत्मान'मित्यादिश्रुत्या जीवकर्तृत्वमीशाधिष्ठानमित्युक्तत्वात्। प्राणवतेति तृती-

यायाः कारकविभक्तित्वसंभवे सहयोगसापेक्षोपपदविभक्तित्वकल्पनायोगाच्च। ॥ इति ज्योतिराद्यधिकरणम् ॥ १० ॥

---

## अथ इन्द्रियाधिकरणम्

## ॥ ॐ त इंद्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॐ ॥

पूर्वोक्तं मुख्यप्राणस्य जीवं प्रत्यकरणत्वमयुक्तम्। तस्यापींद्रियत्वेन तं प्रति करणत्वादिति पूर्वपक्षोत्थानात्संगतिः। अत्र श्रुतिसमन्वयेनोक्तं ब्रह्मणः सर्वस्रष्टृत्वादिकमयुक्तमुत नेति चिंता। तदर्थं श्रुतिरप्रमाणं नवेति। तदर्थं द्वादशानामेवेंद्रियत्वश्रुतिरप्रमाणमुत नेति। तदर्थं सा इदं द्रवणयुक्तियुक्तत्वेन प्रबलयासामान्येन त्रयोदशप्राणानामिंद्रियत्वश्रुत्याबाध्यते नवेति। तदर्थं सामान्यश्रुतिर्द्वादशत्वरूपविशेषश्रुत्यनुसारेण मुख्यप्राणं परिहृत्य न वर्तत उत वर्तत इति। तदर्थमिंद्रियत्वप्रयोजकत्वेन सामान्यश्रुत्युक्तमिदं द्रवणं मुख्यप्राणस्यास्ति नवेति। 'भेदश्रुते'रितिसूत्रे प्राणस्येंद्रियांतराद्भेदे श्रुतिरुक्ता। 'वैलक्षण्या'दितिसूत्रे तु प्रत्यक्षमिति भेदः। मनोपि सत्यतिप्रयत्ने पुमधीनप्रवृत्त्येव। नहि सुषुप्तौ पुंप्रयत्नाभावेपि प्राणस्येव मनसः प्रवृत्तिरस्ति। परेषां भाष्ये तु प्रकृता वागादयः प्राणाः प्राणादिवन्मुख्यप्राणस्य वृत्तिभेदा इति प्राप्ते तत्वांतराणि। एतस्माज्जायते प्राणो मनः सर्वेंद्रियाणि चेत्यादौ भेदव्यपदेशादितिसिद्धांत इत्युक्तम्। तत्र तत्वांतराणीति प्रतिज्ञाध्याहारः। तद्व्यपदेशादित्यस्य भेदश्रुतेरित्यनेन पौनरुक्त्यम्। तच्छब्दस्याध्याहृततत्वांतरपरतेति दोषा इति स्वमतमेव दूषितं भामतीकारेण।

कैश्चिच्च मुख्यप्राणोपींद्रियमिति प्राप्ते तद्वर्जमेकादशैवेंद्रियाणीति सिद्धांतितम्। तत्रेंद्रियस्यैकादशत्वं प्रागेव निरस्तम्। अन्यत्त्वविरुद्धम् ॥

॥ इति इंद्रियाधिकरणम् ॥ ११ ॥

---

अथ संज्ञामूर्तिक्लृप्त्यधिकरणम्

## ॥ ॐ संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॐ ॥

संगतिमाह ॥ तत्प्रसंगसन्निधापितमिति ॥ न केवलं चिन्ताविषयस्य शरीरस्य प्राणाश्रयत्वात्पेटिकाधिकरणसंगती । किन्तु विरिंचस्य मुख्यप्राणत्वाच्चेत्यपि द्रष्टव्यम् । अत्र पूर्वोक्तं विष्णोः सर्वस्रष्टृत्वं 'विरिञ्चो वा इदं सर्वं विरेचयती'ति विरिञ्चस्य सर्वत्र स्रष्टृत्वश्रुतिविरुद्धं नवेति चिन्ता । तदर्थं विरिञ्चस्य स्रष्टृत्वश्रुतिः किं विरिञ्चस्य स्वातन्त्र्येण सर्वस्रष्टृत्वाभिप्राया किंवा कतिपयपदार्थसृष्टौ विरिञ्चस्य द्वारत्वमात्राभिप्रायेति । तदर्थं सर्वस्रष्टृत्वं किं त्रिवृत्कुर्वतोप्युतत्रिवृत्कुर्वत एवेति । तदर्थं रूपादिकं किं त्रिवृत्करणानपेक्षमुत तत्सापेक्षमिति ।

अन्येतु नामरूपव्याकरणं जीवकर्तृकम् । 'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणी'तिश्रुतेरिति प्राप्ते ईश्वरकर्तृकम् । 'सेयं देवते'त्युपक्रम्य 'नामरूपे व्याकरवाणी'त्युत्तमपुरुषोपदेशात् । 'जीवेने-'त्येतत्तु 'अनुप्रविश्ये'त्यनेन संबध्यते । नतु 'व्याकरवाणी'त्यनेनेत्याहुः । तन्न । जीवेश्वरशब्देन नामरूपवद्विशिष्टविवक्षायां तस्य स्वनामरूपकर्तृत्वाभावात्, चिन्मात्रविवक्षायां च तस्याकर्तृत्वाज्जीवकर्तृत्वपूर्वपक्षस्य ईश्वरकर्तृत्वसिद्धांतस्य चायोगात् । जीवभावस्य प्रतिबिंबनरूपप्रवेशाधीनत्वेन जीवरूपेण प्रवेशोक्त्ययोगाच्च ।

॥ इति संज्ञामूर्तिक्लृप्त्यधिकरणम् ॥ १२ ॥

---

अथ मांसाधिकरणम्

## ॥ ॐ मांसादि भौमं यथाशब्दमितरयोश्च ॐ ॥

पूर्वं देहादेः कर्तोक्तः । इहोपादानमुच्यत इति संगतिः । अत्र श्रुतिसमन्वयेनोक्तं ब्रह्मणः सर्वस्रष्टृत्वादिकमयुक्तमुत युक्तमिति चिन्ता । तदर्थं श्रुतिरप्रमाणं नवेति । तदर्थं देहादेर्भूतत्रयात्मकत्वश्रुतिरप्रमाणं नवेति । तदर्थं मांसादेस्तर्पकत्वयुक्त्यनुगृहीतयाऽऽप्यत्वादिश्रुत्या बाधिता नवेति ।

तदर्थं भूतत्रयात्मकत्वेप्याप्यत्वादिश्रुत्यादिकं तत्तद्भूतस्य विशेषसंयोगेन नोपपद्यत उतोपपद्यत इति ॥ नोक्त दोष इति ॥ पुनर्विशेषोक्त्ययोग इत्युक्तदोषो नेत्यर्थः ।

यदुक्तं परेषां भाष्ये उत्तरसूत्रविषयप्रदर्शनाय मांसादिसर्वंभौतिकं त्रिवृत्कृतभूतकार्यमिति मांसादीतिसूत्रेणोक्त्वा यदि सर्वं त्रिवृत्कृतभूतकार्यं तर्हि कथं तैजसमिदमाप्यमिदमिति व्यवस्थेत्याशंक्य भूयस्त्वाद्व्यवस्थेति समाधातुं वैशेष्यादित्त्युत्तरसूत्रमिति । तन्न । मांसादेस्त्रिवृत्कृतभूतकार्यत्वात्सूत्रेणविनापि भूतानां भौतेन त्रिवृत्कृतत्वमात्रेण मांसादेरपि तेन त्रिवृत्कृतभूतकार्यत्वेनाव्यवस्थाशंकाया भूयस्त्वेन व्यवस्थेति समाधेश्च संभवेन मांसादिसूत्रस्य निष्फलत्वात् । भामत्यां तु 'अन्नमयं हि सोम्य मनस्तेजोमयीवा'गितिश्रुत्युक्तं मनसः पार्थिवत्वं वाचस्तैजसत्वं चायुक्तम् । काणादैर्मनसोनित्यत्वोक्तेः । सांख्यैश्चाहंकारिकत्वोक्तेरिति शंकानिरासार्थं मांसादिति सूत्रम् । तत्र च वाङ्मनसे इति वक्तव्ये मांसाद्यभिमानं सिद्धे न सहसाध्यस्योपादाने दृष्टांतलाभाय । यथा मांसादिभौमाद्येवं वाङ्मनसे अपि तैजसभौमे इति । काणादादिमतं तु श्रुत्यादिविरुद्धमित्युक्तम् । तन्न । सांख्यादिस्मृत्यविरोधोक्तेरिहासंगतेः । किञ्च सौत्रेण भौमशब्देन तैजसत्वाद्युपलक्षणे 'यथाशब्दमितरयो'रितिव्यर्थम् । 'मांसादी'त्यादिशब्दोक्तलोहितमज्जारूपदृष्टांतगताप्यतैजसत्वयोरपि भौमशब्देनैव लाभात् । अनुपलक्षणे च 'मांसादी'त्यादिशब्दोक्तवाग्भूदार्ष्टांतिकस्य तैजसत्वं सिध्येदिति यत्किंचिदेतत् ।

केचित्तु 'अनेन जीवेने'तिश्रुतेर्जीवविशेषहिरण्यगर्भकर्तृकं नामरूपव्याकरणमिति पूर्वपक्षयंति । तन्न । जीवशब्दमात्रेण हिरण्यगर्भाप्राप्तेरिति । परोक्तं पूर्वमेव दूषितम् ॥ ॥ इति मांसाधिकरणम् ॥ १३ ॥

इति श्रीमद्ब्रह्मण्यतीर्थपूज्यपादानां शिष्येण व्यासयतिना
विरचितायां श्रीमन्न्यायसुधाटीकाविवृतौ
तात्पर्यचंद्रिकायां द्वितीयाध्यायस्य चतुर्थः पादः ॥ २ ॥ ४ ॥

॥ अध्यायश्च संपूर्णः ॥ ॥ ग्रन्थश्चायं संपूर्णः ॥

॥ श्रीकृष्णार्पणमस्तु ॥

॥ श्रीपूर्णत्रयीशाय नमः ॥

## श्रीमदानन्दतीर्थभगवत्पादाचार्यकृत श्रीमद्ब्रह्मसूत्रभाष्यस्य

# अधिकरणनयमालिका

प्राचां 'बृन्दावनाचार्ये'तिप्रथितश्रीमत्सोदावादिराजमठाधीशश्रीमद्विश्वप्रिय-तीर्थानां (1776-1865) प्रियशिष्येण श्रीमत्कोचीमहीपालसत्सभासमधिष्ठितेन 'कोची रंगप्पाचार्य (1820-91) विद्वन्मणिना विरचिता तदात्मजस्य न्याय-वेदान्तशास्त्रकोविदस्य कोची महीपालसत्सभासमधिष्ठितस्य कोची मध्वराया-चार्यस्य दौहित्रेण तत्कृपाकटाक्षासादितमध्वशास्त्रप्रवेशेन 'विद्यारत्न-शास्त्रनिधि-द्वैतवेदान्तरसज्ञ-मध्वमुनिप्रिये'त्यादिप्रशस्तिभाजा डा. बि. एन्. के. शर्मणा प्रियसुहृद्भ्यः हरतीराघवेन्द्रराव इत्येतेभ्यः तैर्मुद्राप्यमाणश्रीतात्पर्यचन्द्रिकाग्रन्थस्य अनुबन्धत्वेन मुद्रणाय सादरमुपायनीकृतेयं कृतिः ॥

## श्रीमत्कोची रङ्गप्पाचार्यविरचिता

# श्रीमद्ब्रह्मसूत्राधिकरणनयमालिका

**श्रीपूर्णत्रयीशाय नमः**

श्रीमद्वाय्वंशपूर्णप्रमतिवरगुरोः शुद्धहृत्पद्मसंस्थं
श्रीमद्वायुप्रभावैः श्रिततुरगमुखैः वादिराजार्यवर्यैः ।
तद्वंशाख्यामृताब्धिप्रभवकुमुदिनीबन्धुविश्वप्रियार्यैः
नित्यं संसेव्यमानामलपदकमलं संश्रये **व्यासदेवम्** ॥

श्रीमद्व्याससुसूत्रमन्दरवरं त्रय्यन्तपाथोनिधौ
यो निक्षिप्य ममन्थ पूर्णमतिजग्रन्थाख्यदामोत्करैः ।
लेभे न्यायसुधां समस्तविबुधा नाद्यापि तृप्तिं ययुः
पायं पायममन्दसारभरितां तं नौमि **टीकाकृतम्** ॥

यद्ग्रन्था विबुधाधिपैश्च शिरसा मान्या यदीयं यशः
स्फारं दिग्वनिताजनश्रवणसत्ताटङ्कभूषायितम् ।
यद्रूपं मुनिराजहंसपटलीप्रह्लादमाचक्षते
सच्चिच्चन्द्रिकया जगद्भयहरं तं **व्यासराजं** नुमः ॥

केषांचिद्भक्तिरीशे प्रभवति नहि ते शास्त्रजज्ञानपूर्णाः
केऽपि स्युर्मूलटीकाप्रवचननिपुणास्तेऽपि नाचारशीलाः ।
यद्येवं नोपवासाद्यतिशयितमहाक्लेशभाजः तमेतैः
सर्वैः पूर्णं गुणौघैः गुरवरममलं नौमि **विश्वप्रियार्यम्** ॥

श्रीविश्वप्रिययोगीन्द्रपत्पाथोजरजोजुषा ।
रङ्गप्पाचार्यविदुषा क्रियते **नयमालिका** ॥

---

# प्रथमः पादः

## जिज्ञासाधिकरणम्

जिज्ञासा नैव कार्या विषयविरहतः स्वप्रकाशो हि जीवः
तद्भिन्नं ब्रह्म नास्ति स्फुटमहमिति च ज्ञायमानेऽपि नार्थः ।
एवं प्राप्ते ह्यभाणीद्धरिरमितगुणप्रापकब्रह्मशब्दात्
जीवान्यब्रह्मसिद्धेः श्रुतिविहितविचारस्य कर्तव्यतेति ॥ १ ॥

## जन्माद्यधिकरणम्

विष्णौ रूढेरयोगाद्गुणगणनिलये जीव एवात्र वाच्यो
रूढ्या हि ब्रह्मशब्दादिति यदि स तदा प्राह विद्याधिराजः ।
विद्वद्रूढेर्हि योगाद्भगवति महतो ब्रह्मशब्दस्य हेतु-
त्वादेर्विश्वस्य सत्वाद्भगवति परमे ब्रह्मशब्दो हि मुख्यः ॥ २ ॥

## शास्त्रयोनित्वाधिकरणम्

जन्मादेर्हेतुभूतो भवति पशुपतिः सर्ववित्त्वादिहेतोः
स्पष्टं शैवागमोक्तादिति यदि भगवान् वेदराट् प्राह देवः ।
चक्षुर्जन्या यथा मा प्रभवति न रसे तद्वदेवानुमानं
शैवोपष्टंभयुक्तं प्रभवति न जगत्कारणे शास्त्रगम्ये ॥ ३ ॥

## समन्वयाधिकरणम्

वेदव्याख्यानरूपैः शिवकृतवचनैः शास्त्रयोनित्वमीशे
ऽप्यागच्छेदेव रुद्रे तत इदमुदितं लक्षणं दुष्टमेव ।
एवं चेदाह देवः शिवकृतवचसां श्रुत्यनिश्चायकत्वात्
अभ्यासाद्यैश्च लिङ्गैः श्रुतिशिरसि मुहुश्चर्वितैर्नैव दुष्टम् ॥ ४ ॥

## ईक्षत्यधिकरणम्

त्रय्यन्तेऽवाच्यतोक्त्या श्रुतिगतवचनैः ब्रह्म शुद्धं न वाच्यं
गौणात्मा ह्यत्र वाच्यो भवति न च ततः शास्त्रयोनित्वमीशे ।
वेदा ह्यानन्त्यमाप्ता इति च निगदिता वैदिकैर्वाक्यजालैः
तस्मात् त्रय्यन्तराणां दुरधिगमतया नैव शास्त्रार्थ ईशः ॥
चेदीक्षाकर्मतेशे नहि भवति पदैर्वाच्यतामन्तरेण
प्रत्यक्षाद्यैरवेद्ये नच खलु सगुणः प्रोच्यतेऽत्रात्मशब्दात् ।
गौणज्ञानान्न मोक्षो भवति हि परमे हेयता लीनता न
स्वस्मिन् गौणस्य साक्षीत्यपि वचनबलात् प्रोच्यते निर्गुणात्मा ॥
नान्त्यः पक्षोऽपि मान्यः श्रुतिभिरपि तथाऽबाधितार्थेतिहासैः
ब्राह्मैकज्ञानजन्म प्रवदति निगमस्तेन शास्त्रार्थ ईशः ॥ ५ ॥

## आनन्दमयाधिकरणम्

तत्रान्यत्र तथोभयत्र च तथान्यत्रैव सिद्धाः पुनः
शब्दा वेदगताश्चतुर्विधतया लोके प्रसिद्धिं गताः ।

पादेऽत्र प्रथमे समन्वयकथामन्यत्रसिद्धात्मनां
नाम्नां लिङ्गचयस्य चान्वयकथां पादे द्वितीये जगौ ॥
लोके ब्रह्मणि सिद्धशब्दनिचयस्याहान्वयं वेदराट्
तार्तीये, चरमे जगाद परमोऽन्यत्रैव सिद्धात्मनाम् ॥
जिज्ञास्यं ब्रह्म चोक्तं तदपि सुखमयस्साङ्गमित्युच्यतेऽद्धा
सोऽप्यन्यः पद्मजादिर्भवति शतसुखो रुद्रलक्ष्म्यादयो वा ।
एवं चेत्प्राह पंचस्वपि च सुखमयाद्येषु हि ब्रह्मशब्दात्
प्राचुर्यार्थो मयट् स्यात् प्रचुरसुखयुतः श्रीधवो विश्वयन्ता ॥
सत्यज्ञानादिशब्दैः प्रकृतसुखमयाद्यैश्च लभ्योऽर्थ एकः ।
तज्ज्ञानान्मुक्तिमाह श्रुतिरपि च सुखे तारतम्याभिधात्री ।
पूर्णानन्दत्वमीशे प्रवदति विदुषां योगमानन्दपूर्वैः
पश्चाप्यानन्दपूर्वा भवति हि परमं ब्रह्म नाब्जोद्भवादिः ॥ ६ ॥

## अन्तरधिकरणम्

आनन्दे दृश्यतोक्ता श्रुतिशिरसि सा प्रोच्यतेऽन्तःस्थ इन्द्र-
स्तुल्याद्यैरेष शक्रादिरिति सुखमयोऽप्यन्य इन्द्रादिरेव ।
एवं चेत्प्राह विष्णव्यभिचरितसरिन्नायकस्थत्वहेतोः
बाधात् श्रुत्यादिकानां विबुधवरमुखा नात्र वाच्या भवन्ति ॥ ७ ॥

## आकाशाधिकरणम्

आनन्दो ह्युक्त आकाश इति स तु पुनः श्रूयते सामवाक्ये
स स्याद् रूढेः प्रसिद्धं खमिति सुखमयो विष्णुभिन्नो भवेच्चेत् ।
प्राह व्यासोऽत्र देवः श्रुतिगदितवरीयस्त्वपूर्वाद्धि लिङ्गात्
रूढेर्बाधाच्च योगात् भगवति महतो विष्णुराकाशनामा ॥ ८ ॥

## प्राणाधिकरणम्

प्राणो ह्यानन्द उक्तः श्रुतिशिरसि महाभोगशब्देन सोऽपि
प्राणो मुख्यो हि वायुः न भवति भगवांस्तत्र रूढेरभावात् ।

वेदोऽत्र प्राह विष्णव्यभिचरितरमाह्णीपतित्वादिलिङ्गात्
विद्वद्रूढेश्च योगाद्भवति महतः प्राणशब्दार्थ ईशः ॥ ९ ॥

## ज्योतिरधिकरणम्

आनन्दे पूर्वमुक्ता श्रुतिशिरसि गुहानिष्ठता सापि चोक्ता
ज्योतिष्यन्यच्च तत्स्यान्नहि भवति हरिस्तत्र रूढेरभावात् ।
इत्थं चेत्प्राह देवो हरिनियतसुकर्णादिदूरत्वलिङ्गात्
विद्वद्रूढेश्च सत्त्वाद् भगवति परमे ज्योतिराख्यो हि विष्णुः ॥ १० ॥

## गायत्र्यधिकरणम्

ब्रह्मेति ज्योतिरुक्तं निगमगवचने प्रोच्यते सामगैस्तत्
गायत्रीत्येव विष्णुर्न भवति हि ततो ज्योतिरित्यत्र चाह ।
गानत्राणादिकर्ता श्रुतिशिरसि हरिः प्रोच्यते पौरुषाख्ये
सूक्ते भूतादिपादस्त्विति च स भगवानेव हि ज्योतिराख्यः ॥ ११ ॥

## अन्तिमप्राणाधिकरणम्

प्राणो ब्रह्मेति चोक्तः स खलु न भगवांश्चक्षुरादिप्रवेशात्
इन्द्रत्वेनाभिधानात् श्रुतिशिरसि तथा प्राणजीवीयलिङ्गात् ।
चेदत्र ब्रह्मशब्दात् श्रुतिनिगदितदेवोपदेश्यत्वलिङ्गात्
इन्द्राविष्टः शरीराद्यखिलसुनियमनः प्राणशब्दार्थ ईशः ॥
इत्थं त्रय्यन्तशास्त्रामृतजलधिभवन्यायसत्सूत्रभाष्यं
श्रीमद्वाय्वंशपूर्णप्रमतिविरचितं मुक्तिसोपानभूतम् ।
तद्वाद्याध्यायसंस्थप्रथमचरणगा ये नया द्वादश स्युः
ते प्रोक्ता पद्यजालैर्गुरुहृदयगतः प्रीयतां वाजिवक्त्रः ॥ १२ ॥

**इति श्रीमद्विश्वप्रियतीर्थशिष्यश्रीमत्कोच्चीरंगप्पाचार्यकृतौ**
**नयमालिकायां प्रथमाध्यायस्य प्रथमः पादः ॥**

## द्वितीयः पादः

### सर्वगतत्वाधिकरणम्

सर्वव्यापित्वमीशे गदितमपि च तत् श्रूयते पद्मबन्धौ
सारे संवत्सराणां श्रुतिशिरसि ततः सूर्यशब्दप्रयोगात् ।
आदित्येऽनुक्तिलिङ्गात् श्रुतिनयनमयत्वाभिधानाच्च सूर्यो
जीवो वा सर्वगः स्यात् इति च निगदिते प्रावदत् सूत्रकारः ॥

अत्रैव ब्रह्मशब्दाद्धरिरखिलगतश्चाश्रुतत्वाभिधानात्
सर्वस्थो नैव चान्यो भवति सकलगस्योपदेष्टा हि जीवः ।
एतं ब्रह्मेतिशब्दात् सकलगमजितं ब्रह्म तद्व्योमवत्स्यात्
चक्षुःश्रोत्रादियन्तृत्वत उदितमभूत् तन्मयत्वं श्रुतौ हि ।
देहे तिष्ठन्नियन्ता हरिरपि न भवेज्जीववद्भोगयुक्तः
स्वातन्त्र्यात् सर्वशक्तेः इति सकलगतं ब्रह्म नारायणाख्यम् ॥ १ ॥

### अत्तृत्वाधिकरणम्

संहर्तृत्वं च विष्णोः प्रकथितमपि तन्नैव संपद्यतेऽद्धा-
यन्मृत्योस्तत् ब्रवीति श्रुतिरियमदितेरित्ययं तुच्छपक्षः ।
नेष्टे मृत्युर्निहन्तुं निखिलमपि हरेः सर्वसंहर्तृतापि
प्रोक्तोऽत्ता परात्मा जलजलजभवस्रष्टृताया इहोक्तेः ॥ २ ॥

### गुहाधिकरणम्

सर्वात्तृत्वप्रविष्टं न च भवति हरौ कर्मभोक्तृत्वमीशे
द्वित्वायोगाच्च जीवेश्वरयुगलगता पातृता काठकोक्ता ।
चेदित्थं सोह्यभाणीद् द्विवचनविषयः स्याद्धरिर्युग्मरूपो
घर्मा पाद्मादिवाक्ये शुभफलकथनात् पातृता ह्यद्रतेऽस्मिन् ॥ ३ ॥

## अन्तराधिकरणम्

आनन्दाख्ये नयेऽसौ हरिरिनग इति प्रोच्यते ह्यक्षिवाक्ये
नेत्रान्तःस्थस्तु कश्चिन्नयनदिनकरौ भेदहीनौ ततोऽग्निः ।
सूर्यस्थश्चेत् तदाह ह्युपनिषदुदितात् ब्रह्मशव्दादभीत्वात्
कं ब्रह्मेत्यादिरूपात् हरिपरवचनादक्षिगः सर्वयन्ता ॥ ४ ॥

## अन्तर्याम्यधिकरणम्

देवः प्रागन्तराख्ये हरिरमृत इति प्रोक्त आरण्यकेऽसा-
वन्तर्यामीति चोक्तो भुवनतनुतया स प्रकृत्यादिरेव ।
नैवं शङ्क्यं पृथिव्याद्यधिपतिविबुधावेद्यमाहात्म्ययोगात्
विज्ञानादन्तरत्वाद् हरिरखिलजगद्गौणदेहो नियन्ता ॥ ५ ॥

## अदृश्यत्वाधिकरणम्

दृश्यत्वाभाव उक्तः सुखमयनय आथर्वणे ह्यक्षरे स
प्रोक्तस्तस्मात्परोक्तेस्तदपि न भगवान् किन्तु लक्ष्म्यादयः स्युः ।
चेदित्याह त्र्यधीशस्त्वृगभिधपरविद्याधिगम्यत्वलिङ्गात्
सार्वज्ञ्यादक्षरेषु त्रिषु परमतमो विष्णुरेव ह्यदृश्यः ॥ ६ ॥

## वैश्वानराधिकरणम्

सर्वस्थत्वं ह्यतीते नय उदितमभूत्तच्च वैश्वानरेऽपि
प्रोक्तं छन्दोगवाक्ये श्रुतिवचनबलात् सोऽग्निरेवात्र नो चेत् ।
सूक्तानां नैव भेदोऽस्त्वपि च पचनतो होमसंबन्धिलिङ्गाद्-
अग्न्यङ्गत्वान्नचायं हरिरिति स तदा प्राह वेदान्तवेत्ता ॥

पूर्णत्वार्थात्मशब्दात्परमपरतया निश्चितादत्र गीता-
वाक्यादग्न्यादिनामादिभिरपि परमस्योपसत्तेर्विधानात् ।
सूक्तानां हि व्यवस्था मुनिवरविहिता पौरुषाकारतोऽपि
श्रीशो वैश्वानराख्यो नहि भवति जडं नाग्निदेवस्तथेति ॥

स त्रय्यन्ताभिधानादमृतजलनिधेः श्रीमदानन्दतीर्था-
चार्याणां बुद्धिनाम्ना सकलविषयिणा लोलितान्मन्दरेण ।
सम्भूता दोषहीना नयमणिततयस्तेषु लिङ्गाख्यपादे
संप्रोक्ताः पद्यजालैर्गुरुहृदयगतः प्रीयतां त्रय्यधीशः ॥ ७ ॥

**इति श्रीमत्कोचीरंगप्पाचार्यविरचितायां ब्रह्मसूत्राधिकरणनयमालिकायां प्रथमाध्यायस्य द्वितीयः पादः ॥**

## तृतीयः पादः

### द्युभ्वाद्यधिकरणम्

विद्यागम्यत्वमुक्तं भगवति तदुताथर्वणे प्रोच्यतेऽद्धा
द्युभ्वाद्याधारभूते स तु न च भगवान् जायमानत्वलिंगात् ।
विद्यागम्यो हि जीवो भवति भगवता भेदहीनत्वतोऽतो
जीवो वा रुद्रशब्दात् पशुपतिरपि वा वायुशब्दादनो वा ॥
चेदत्राहात्मशब्दात् परमहरिपरान्मुक्तगम्यत्वहेतोः
उत्पत्तेर्व्यक्तिताया भगवति कथनाद् द्वा सुपर्णेति चात्र ।
भेदोक्तेर्जीवविष्ण्वोर्भगवति च रुजां द्रावणाद्यैर्निमित्तैः
सिद्धे रुद्रादिनाम्नां हरिमखिलजगद्धारकं व्यासदेवः ॥ ॥ १ ॥

### भूमाधिकरणम्

आनन्दाख्ये नये याप्युरुसुखमयता सा तु वेदान्तवाक्ये
यो वै भूमेति भूम्नः स तु नहि भगवान् नाम चारभ्य सर्वान् ।
श्रेष्ठानाशान्तमुक्त्वा तदुपरि भगवान्प्राण उक्तो हि पूर्वं
तद्वत् प्रश्नाद्यकृत्वा सुखमयपरभूमोपदेशाद्धि वायुः ॥
चेन्मैवं ब्रह्म भूमा पुरुसुखमयताहेतुतो मूर्ध्नि सर्व-
स्योक्तेः प्राणाच्च भूयानुत भवति क इत्यंश ऊह्यो यतोऽत्र ।
यद्वान्तर्यामिवाची भवति निगमगः प्राणशब्दस्तमेव
प्राणोऽनूत्क्रामतीति श्रुतिवचनबलादुत्क्रमे नैव बाधः ॥ ॥ २ ॥

## अक्षराधिकरणम्

दृश्यत्वाभाव उक्तः श्रुतिशिरसि स च प्रोच्यते ह्यक्षरे तत्
श्रीतत्त्वं ह्यक्षराख्यं स्मृतिवचनगताव्यक्तशब्दाच्च तस्मिन् ।
एतस्यैवाक्षरस्येत्युपनिषदुदितात् पुष्पवन्ताश्रयत्वात्
तन्नाश्नातीति वाक्येऽप्यनशनकथनाच्चेति चेदाह देवः ॥

एतद्वेदान्तवाक्यं सुनिखिलजगदाधारतां खाख्यलक्ष्म्या-
मुक्त्वा तामक्षराख्ये भगवति हि जगौ नाक्षराख्या ततः श्रीः ।
एतस्यैवाक्षरस्यादितिसुतशशिनौ संधृतौ शासनादि-
त्युक्तेः स्थौल्याद्यभावाञ्जन इव परमो नास्ति तेनाक्षरोऽसौ ॥ ३ ॥

## सदधिकरणम्

स्रष्टृत्वं पूर्वमुक्तं तदपि सति जगौ सामवेदान्तवाक्यं
तत्सन्न ब्रह्म यस्माद्विकृतिरहितं किन्तु चेत्स्यात् प्रधानम् ।
ऊचे विज्ञानरश्मिः श्रुतिगतवचने हीक्षणाख्यक्रियोक्तेः
तत्सन्नैव प्रधानं स हि धृतबहुरूपो हरिर्वै सदाख्यः ॥ ४ ॥

## दहराधिकरणम्

चन्द्राद्याधारतोक्ता भगवति निगमे सा तु हृत्पद्मसंस्थे
प्रोक्ता छन्दोगवाक्ये स तु नहि हरिराकाशशब्दप्रयोगात् ।
तस्यान्ते सूक्ष्मभूतं सुषिरमिति समाख्याबलात्तैत्तिरीये
भूताकाशाभिधानं हृदयकमलगं ह्यन्वयः संस्तदा स्यात् ॥

जीवो वा हृद्गुहास्थो भवति स हि परंज्योतिरित्युत्तरत्र
प्रोक्तस्तस्यैव युक्ता दहरनिवसतिर्नैव विष्णोर्भवेच्चेत् ।
अत्र व्यासो ह्यभाणीत् हृदयकमलगव्योमगो लक्ष्म्यधीशो
मृत्यूज्झत्वादिधर्मादुपनिषदुदितात् सत्यकामत्वलिङ्गात् ॥

सुप्तप्राप्यत्वहेतोः श्रुतिषु निगदितात् ण्यस्य चारस्य सिन्धोः
तल्लोकस्थत्वलिंगात्परमहरिपराद्धारणादाधिपत्यात् ।
लिंगादारण्यकोक्तात् दहरगगनगे पालकत्वादिरूपात्
सर्वाधारो वचो वा सुषिरमिति वचो मालिका वेश्मनीति ॥

यज्ज्योतिःप्राप्य मुक्तो भवति स हि हरिस्त्वेष इत्युच्यतेऽद्धा
सर्वव्याप्तोऽपि विष्णुः दहरगगनगो व्योमवन्नात्र शंका ।
किं त्वत्रास्तीति वाक्यात् दहरगगनगं ब्रह्म कीदृग्गुणेतं
प्रश्नो ह्येवं कृतःस्यात् तदनु निगदितं ब्रह्म विश्वं दधानम् ॥ ५ ॥

## अनुकृत्यधिकरणम्

ब्रह्मादृश्यत्वमुक्तं श्रुतिशिरसि कठे ह्यानुकूल्येन वेद्ये
प्रोक्तं तत्रैव विष्णुः प्रकृतसुखमिदं ज्ञानिनां चेत्तदाह ।
तं भान्तं ह्येव भाति त्वनु सकलमिदं चेति विष्ण्वेकनिष्ठं
गीतोक्तं लिंगमत्रोदितमिति भगवद्रूपमेतत् सुखात्म ॥ ६ ॥

## वामनाधिकरणम्

जिज्ञास्यत्वं यदुक्तं तदपि च कठ ईशान एवोच्यतेऽद्धा
सोऽयं प्राणव्यवस्थापनपरवचनात् वायुरेवेति चेन्न ।
लिंगानां विष्णुगत्वात् श्रुतिरनिलगा वामनाख्यावती सा
हीशानोऽङ्गुष्ठमात्रो हृदयपरिमितो मानुषोपासकानाम् ॥ ७ ॥

## देवताधिकरणम्

देवैश्चोपास्यतोक्ता न भवति दिविजा नित्यवेदोदितत्वात्
नित्याश्चेन्नार्थिनोऽतोऽधिकृतिरहिता वेदविद्यासु नूनम् ।
कर्मोच्छेदः तदा स्यात् यदि जनिसहिताश्चेति चेदत्र देवः
प्राहानित्यांश्च देवानाधिकृतिसहितान् श्रेष्ठबुद्ध्यादिमत्वात् ॥

एते मुक्तिं यदाप्तास्तदनु न मनुजास्तत्पदे योग्यतेता
नाम्ना रूपेण तुल्या निजसुपदगताः कर्मणां नो विरोधः ॥
जैमिन्याचार्यपक्षस्त्विति विबुधमुखाः स्वस्वमोक्षातिरिक्ते
नार्थित्वं प्राप्नुयुस्तन्न तदुदितफलब्रह्मविद्याधिकारः ।
अत्र श्रीव्यासदेवस्त्वतिशयितमहाज्ञानकर्मातिरेकात्
मोक्षीयज्ञानवृद्धेरधिकृतिभरिता निर्जरा इत्यभाणीत् ॥ ८ ॥

## अपशूद्राधिकरणम्

नाम्ना पौत्रायणस्य प्रकटमुनिवचोव्यक्तशूद्रत्वकस्य
स्पष्टं विद्योपदेशादधिकृतिसहिताः पादजा इत्यशुद्धम् ।
धिक्कारात् हंसजाताज्जनितबहुशुचा धावनाच्छूद्रतोक्ता
राजा पौत्रायणोऽसौ श्रुतिवचनगताच्चैत्ररूपाच्च लिंगात् ॥
आम्नायानामधीतावुपनयनमुखा वेदराद्धन्तसिद्धाः
तेषां शूद्रे ह्यभावादुपनयनकृतेः शूद्रताभावमीक्ष्य ।
वेदानामर्थवित्तौ हृदयविदलनं श्रावयत्यागमोक्तिः
तस्माच्चैवाधिकारः श्रुतिषु पदजनैर्नेत्यभाणीत् श्रुतीशः ॥ ९ ॥

## कम्पनाधिकरणम्

ब्रह्मज्ञानेन मोक्षः श्रुतिभिरभिहितः काठके सोऽपि चोक्तो
वज्रज्ञानेन रूढेस्तदपि हरिहयस्यायुधं ह्युद्यतत्वात् ।
चेदाह व्यासदेवः सकलजगदनप्राणचेष्टाप्रदत्त्वात्
उद्युक्तत्वाच्च वज्रं भवति हि भगवान् वर्जनादेव ना··

## ज्योतिरधिकरणम्

ज्योतिर्ब्रह्मेति चोक्तं तदपि च बृहदारण्यकप्रोक्तलिंगात्
संचाराल्लोकयुग्मे नहि भवति हरिर्जीव एवेति चेन्न ।

ज्योतिर्विष्णुस्तथोक्तेः श्रुतिशिरसि चतुर्वेदसन्ताम्नि वक्ति
प्राज्ञेनेति श्रुतिर्यद्गतिमपि हि समत्वेन जीवं समूह्य ॥ ११ ॥

## आकाशाधिकरणम्

द्युभ्वाद्याधारतोक्ता श्रुतिशिरसि हि सा प्रोच्यते सामवाक्यात्
आकाशे नैव स स्याद्धरिरपि तु वियत् सुप्रसिद्धं निपातात् ।
चेदाकाशो हि विष्णुः श्रुतिगतवचने नामरूपादिहीनं
ब्रह्मेत्युक्तेः प्रसिद्धिं श्रुतिषु निगदितां ज्ञापयेतां निपातौ ॥ १२ ॥

## सुषुप्त्यधिकरणम्

ब्रह्मासंगत्वमुक्तं तदपि च बृहदारण्यके प्रोच्यतेऽद्धा
द्रष्टुः स्वप्नस्य सोऽयं भगवदभिदया जीव एवेति चेन्न ।
प्राज्ञेनेति वाक्ये भगवति कथनाज्जीवभेदस्य सुप्ता-
वुत्क्रान्तौ विष्णुरेवाखिलविषयमतिः स्वप्नविच्चाप्यसंगः ॥ १३ ॥

## ब्राह्मणाधिकरणम्

नित्यं माहात्म्यमुक्तं भगवति तदिदं ब्राह्मणस्याभिधत्ते
वाक्यं ह्यारण्यसंस्थं स च कमलजनिर्ब्राह्मणत्वादजत्वात् ।
चेदत्र ब्राह्मणस्तु श्रुतिनिगदितसर्वाधिपत्यामृतत्वा-
द्याद्विष्ण्वेकलिंगात् सहि जनिरहितो वेदवेद्यो न चान्यः ॥
इत्थं त्रय्यन्तशास्त्रामृतजलधिभवन्यायसत्सूत्रभाष्यं
श्रीमद्वाय्वंशपूर्णप्रमतिविरचितं मुक्तिसोपानभूतम् ।
तस्याद्याध्यायतार्तीयकचरणगता ये नयाःस्युर्द्विसप्त
प्रोक्तास्ते पद्यजालैः गुरुहृदयगतः प्रीयतां त्रय्यधीशः ॥ १४ ॥

**इति श्रीमत्कोञ्चीरंगराचार्यविरचितायां ब्रह्मसूत्राधिकरणनयमालिकायां प्रथमाध्यायस्य तृतीयः पादः ॥**

# चतुर्थः पादः

## आनुमानिकाधिकरणम्

सर्वे शब्दाः श्रुतिस्थाः परमहरिपरा मुख्यवृत्त्येति चोक्तं
तत्राव्यक्तात्परोक्तेर्नहि परमपरोऽव्यक्तशब्दः कथंचित् ।
एवं बद्धादिशब्दा अपि न हरिपरास्तत्र बद्धत्वपूर्वे
दोषा दोषातिदूरे न कथमपि ततः सर्वशब्दा न विष्णौ ॥
चेदाहाव्यक्तशब्दः प्रवदति परमं मुख्यवृत्त्या, प्रधानं
तत्संबन्धाच्च, विष्णौ श्रुतिभिरभिहितो मुख्यतः सूक्ष्मभावः ।
भृत्येशो राजवर्यो भुवि हि जयिपदात्प्रोच्यते तद्वदीशः
प्रोक्तो बद्धादिशब्दैर्महत इति हरिः कथ्यते श्रौतवाक्ये ॥
तद्विष्णोः स्थानगन्ता स इति च वचनात् श्रौतवाक्याच्च विष्णुः
प्रोक्तः श्रौते च वाक्ये चमस इति शिरः प्रोच्यते तद्वदीशः ॥ १ ॥

## ज्योतिरधिकरणम्

शब्दाः सर्वे श्रुतिस्थाः परमहरिपरा इत्यभाणीद् वसन्त-
ज्योतिष्टोमादिशब्दा यदि च हरिपरास्तर्हि कर्माद्यसिद्धिः ।
चेदत्रोचे शतर्चिप्रमुखमुनिपदैरेतमेवेति विष्णुं
चैके ब्रूयुः ततोऽयं वदति हि परमं ज्योतिरादिश्च शब्दः ॥
मध्वादिष्वात्मविद्यास्विव परमहरिः प्रोच्यतेऽत्रापि हानि-
र्लोकव्यापारकार्ये न हि भवति ततः कर्मलोपेन चेति ॥ २ ॥

## पञ्चजनाधिकरणम्

यस्मिन्पञ्चेति वाक्योदितजननिकरा नैव विष्णुर्बहुत्वा-
दाधाराधेयभावो नहि भवति हरौ भेदहीनत्वतश्चेत् ।
मैवं प्राणादियन्ता प्रकटितबहुरूपो हरिस्तत्र चोक्तः
प्राणस्येत्यत्र तस्मात् न च हरिपरताहानिरित्याह कृष्णः ॥ ३ ॥

## आकाशाधिकरणम्

आकाशो ह्यात्मनोऽभूदिति निगमगताकाशशब्दो न नित्ये
स्वस्मात् स्वोत्पत्तिवाणी भगवति न भवेद् व्याहता लोकतश्चेत् ।
तत्राहात्माख्यरूपाद् गगनगतहरिर्व्यज्यतेऽनेन वायौ
तस्माद् व्योमादिसंस्थो भवति हि भगवांस्तत्तदाख्याभिधेयः ॥ ४ ॥

## समाकर्षाधिकरणम्

रूढ्या योगाच्च विष्णुः श्रुतिवचनगतैः शब्दजालैर्यदि स्यात्
वाच्यो लोकेषु न स्याद् व्यवहृतिरपि तत्संगतश्चेत्तदानीम् ।
शब्दाः सर्वेऽपि गौणा यदि जगति भवेद्रूढिरीशे च विष्णो-
र्वाच्यत्वं मुख्यवृत्त्या नहि भवति तदेत्यत्र देवो जगाद ॥
स्याद्रूढेस्तुल्यतायामपि हरिविषये सा परा प्राज्ञयोगा-
ल्लोके मुख्या हि रूढिर्व्यवहृतिविशतः सुप्रसिद्धिः पदानाम् ।
संकेताच्छब्दशास्त्राभिहितगुणपदेनोच्यतेऽकारवर्णो-
यद्वत् चित्रस्थसिंहे व्यवहृतिवशतः सुप्रसिद्धिर्यथेति ॥
ज्ञानान्मोक्षस्य सिद्धेः श्रुतिगतवचनं नैव कर्मादिवाची-
त्यत्र ज्ञानेन कर्म प्रभवति सफलं चेति केचिद् वदन्ति ।
ज्योतिष्टोमादिवाक्यैर्मिलितमिह भवेदङ्गवाक्यं यथा वा
तद्वत् कर्मादिवाक्यं हरिपरवचनेनैकवाक्यत्वमीयात् ।
वैराग्यार्थं च कर्मप्रकथनमवदच्चाश्मरथ्यो हि हेतुं
ज्ञाने प्राहौडुलोमिः, जगदधिकरणं ब्रह्म वक्तुं तदन्ये ॥ ५ ॥

## प्रकृत्यधिकरणम्

एष ह्येवेति वाक्ये प्रकृतिरिति पदैः स्त्र्यादिशब्दैश्च विष्णुः
स्त्रीत्वाभावान्न चैनं स्त्रियमिति वचनान्नोच्यते चेत्तदेशः ।
अब्धिं नद्यो यथेति श्रुतिरिह परमे सर्वनाम्नां प्रवेशं
ब्रूते न स्त्रीति वाक्यं निगदति परमेऽज्ञेयतां नात्र हानिः ॥

एष ह्येवेति वाक्यं प्रकृतिपुरुषतां स्पष्टमेवाभिधत्ते
तस्यां स्थित्वादिकाले परिणमयति तां तेन देवस्तदाख्यः ।
देहात् स्त्रीयात् प्रसूते निखिलजगदपीतीश्वरे लोकसिद्धं
स्त्रीत्वं यद्भूतयोनिं त्विति निगमबलात् संभवेदित्यभाणीत् ॥ ॥ ६ ॥

## सर्वव्याख्यानाधिकरणम्

ब्रह्मैतत्सर्वशब्दैरुदितमिति वचो नैव युक्तं यतस्तत्
शून्यासच्छब्दवाच्यं न भवति सुतरां भावरूपत्वतोऽस्य ।
एवं प्रोक्ते रमेशः श्रुतिनिगदितसद्योगतः सर्वशब्दै-
र्वाच्यं ब्रह्मेति सिद्धेः सकलगुणयुतं ब्रह्म जिज्ञास्यमाह ॥
इत्थं त्र्यन्तशास्त्रामृतजलधिभवन्यायसत्सूत्रभाष्यं
श्रीमद्वाय्वंशपूर्णप्रमतिविरचितं मुक्तिसोपानभूतम् ।
तस्मिन्नध्याय आद्ये चरमचरणगा ये नयाः सप्तसंख्याः
ते प्रोक्ताः पद्यजालैर्गुरुहृदयगतः प्रीयतां त्र्यधीशः ॥ ७ ॥

**इति श्रीमत्कोच्चीरंगप्पाचार्यविरचितायां ब्रह्मसूत्राधिकरणनयमालिकायां प्रथमाध्यायस्य चतुर्थः पादः**

# द्वितीयाध्यायस्य प्रथमः पादः

अध्याये ह्यविरोधनाम्नि चरणे त्वाद्येऽविरोधं जगौ
युक्त्या वेदपतिर्द्वितीयचरणे दुर्वादिवादानलम् ।
दूरीकृत्य मताविरोधमथ तार्तीयपादे पुनः
वेदानामविरोधमाह चरमे न्यायेतवेदैस्तथा ॥

## स्मृत्यधिकरणम्

जन्माद्यस्येति सूत्रे गदितमपि जगत्कारणत्वं विरोधात्
नो युक्तं सर्ववेत्तृप्रवरपशुपतिप्रोक्तशैवागमेन ।

आप्तोक्तत्वादिहीनं निगमगवचनं नैव मानं हि तस्मात्
विष्णोर्जिज्ञास्यतोक्ता न घटत इति चेन्मैवमित्याह कृष्णः ॥

नीरेजोद्भूतशर्वप्रमुखसुरकुलोत्तंससर्वज्ञवर्य-
श्रीविष्णुप्रोक्तमोक्षप्रदमहितमहापञ्चरात्रागमेन ।
साहाय्योपेतनित्यश्रुतिमतविपरीतार्थदुष्टागमानां
अप्रामाण्यात् परेशे श्रुतिनिगदितजगत्कारणत्वं सुसिद्धम् ॥ १ ॥

## श्रुतिनित्यत्वाधिकरणम्

वेदो नैव प्रमाणं श्रुतिनिगदितकारीरियागेऽप्यदृष्टे-
र्वृष्टेस्तत्साम्यतोऽन्यान्यपि निगमवचांसीति चेदाह कृष्णः ।
नित्यत्वान्नैव दोषः श्रुतिततिषु भवेच्छैवशास्त्रे यथा स्यात्
वाचेत्याम्नायवाणी ह्यवगमयति तन्नित्यतां वीतशङ्कम् ।
आम्नायस्य स्वतस्त्वाच्छ्रुतिवचनामानता नैव शङ्क्या
तत्र प्रोक्ताखिलार्थानधिगतिरपि या कर्तृकर्मादिदोषात् ॥ २ ॥

## अभिमान्यधिकरणम्

आपःप्रोचुश्च मृत्स्नावददिति हि वचो न प्रमाणं विरोधा-
द्युक्त्या यद्बाधितार्थं नहि खलु वचनं मानतामेति लोके ।
एवं प्राप्ते जगाद श्रुतिपतिरखिला वेदवाचः प्रमाणं
मृत्स्ना वक्तीति वाक्यात्तदभिमतियुता देवता प्रोच्यते हि ॥ ३ ॥

## असदधिकरणम्

अस्याग्रेऽसत् समासीदिति वचनबलात् कर्तृता नैव विष्णो-
र्युक्ताग्रे वस्त्वभावाज्जगत इव हरेर्भाववस्तुप्रवेशात् ।
कार्यत्वात् कर्तृसिद्धौ भवति हि जगतः प्रागभावोऽस्य कर्ते-
त्येवं प्राप्ते जगाद श्रुतिपतिरुदितं नैव संजाघटीति ॥

कर्तृत्वं बुद्धिपूर्वाकृतिरिति हि मतं तन्निषेधैकरूपा-
भावस्येत्युक्तिरस्ता लयजगदुदयौ शेषवत् सत्प्रपूर्वौ ।
दृष्टान्ताभावतोऽग्रे न भवति सकलाभावधर्मेऽनुमानं
मानं वेदोपजीव्यं त्वसदिति निगमेनोच्यते ब्रह्म नित्यम् ॥
दृष्टान्ताभावभावैः जगदपि विना कारणेनेति पक्षो
जीवानां कर्तृता स्यादिति च निगदितः शोभते नेति चासौ ॥ ४ ॥

## भोक्त्रापत्त्यधिकरणम्

मुक्तैरीशस्य चैक्यं गदितमिह परे सर्व एकीभवन्ती-
त्यादौ तस्मान्न युक्तं लयजगदुदयस्थेमकर्तृत्वमीशे ।
चेदत्र प्राह सिद्धा यदि परमहरेरेकता च्चिर्न च स्यात्
शुद्धे सिक्तं यथा वा जलमिति वचनादेकता साम्यमेव ॥ ५ ॥

## तदनन्यत्वाधिकरणम्

लोके कुम्भादिकर्तुः प्रथितबहुलसत्साधनैः सृष्टिदृष्टया
तद्वद्विश्वस्य सृष्टया बहुगुणभरितो नैव विश्वस्य कर्ता ।
चेदत्राहास्ति किंस्विन्निगमगवचनं ह्याक्षिपत्साधनौघं
तस्मात् सर्वस्वतन्त्रं सकलगुणयुतं ब्रह्म तद्विश्वकर्तृ ॥ ६ ॥

## इतरव्यपदेशाधिकरणम्

यज्जीवप्रेरकत्वं भगवत इति तत्कल्पनीयं हरिश्चा-
दृश्यः कल्प्योऽस्य कर्तेत्यनुभवबलतो जीव एवेति चेन्न ।
जीवो यद्येव कर्ता स्वत इति च भवेत्तर्ह्यनिष्टं न कुर्यात्
सर्वेष्टं वा प्रकुर्यान्न हि भवति च तत्तेन जीवो न कर्ता ॥
नाकेशा वेदगीता अपि दृगविषयाः सन्ति लोके पिशाचाः
संदृश्यन्ते न चैते किमु परमहरिः सर्वशक्ती रमेशः ॥ ७ ॥

## शब्दमूलत्वाधिकरणम्

पूर्णा शक्ती रमेशे यदि भवति च तामल्पकार्ये नियुङ्क्ते
चेद्दोषोऽल्पापि शक्तिर्यदि भवति तदा नेहवाक्याद्विरोधः ।
चेदत्र प्राह वेदप्रमितगुणगणा नैव युक्तेर्विरुद्धा
विष्णौ वेदैकवेद्ये वदति हि निगमश्चित्रशक्तिं रमेशे ॥
ईशः पाण्यादिहीनः श्रुतिषु निगदितः कर्तृतोऽतो न तस्ये-
त्युक्तिर्दुष्टा यतोऽयं प्रकृतिजचरणाद्यङ्गहीनो रमेशः ॥ ८ ॥

## नप्रयोजनाधिकरणम्

पूर्णो विश्वस्य कर्ता न हि भवति हरेः प्राप्यमिष्टं क्व च स्यात्
इष्टाभावे प्रवृत्तिर्न खलु समुचितेत्यत्र देवो जगाद ।
दृष्टानन्दात्प्रवृत्तिः जगति जनगता नृत्तगानादिकेषु
स्यात् तद्वत् श्रीरमेशे सुजनगतविमोक्षैकदक्षा प्रवृत्तिः ॥ ९ ॥

## वैषम्यनैर्घृण्याधिकरणम्

कर्मापेक्ष्यैव विष्णुर्यदि सृजति तदा स्यात्परायत्तताख्यो
नो चेद् वैषम्यदोषो लगति तत इद लक्षणं दुष्टमेव ।
चेदत्राह त्र्यधीशः सकलमपि जगत्कर्मणा निर्मिमीते
तत्कर्मानादितन्त्रं तदपि भगवतो नो भवेत् पारतन्त्र्यम् ।
कर्मापेक्ष्यापि सृष्टौ न च परमहरेरुक्तदोषप्रसक्तिः
वेदाप्रामाण्यहेतुर्भवति विषमता निर्घृणत्वं च दोषः ॥ १० ॥

## सर्वधर्मोपपत्त्यधिकरणम्

पूर्णत्वं सद्गुणौघैर्भगवति सुतरां चेतनत्वान्न युक्तं
लोके कुत्राप्यदृष्टं तदिति हि गदितेऽत्राह विद्याधिनाथः ।
स्वातन्त्र्यात् सर्वकर्तुः गुणगणयुतता वेदवाक्याच्च सिद्धा
अदृष्टाप्यन्यत्र **तस्माद् गुणगणनिलयः श्रीश एवेति सिद्धम्** ॥

इत्थं त्रय्यन्तशास्त्रामृतजलधिभवन्यायसत्सूत्रभाष्यं
श्रीमद्वाय्वंशपूर्णप्रमतिविरचितं मुक्तिसोपानभूतम् ।
तद्वाध्याये द्वितीये प्रथमचरणगैकादशोक्ता नयास्ते
पद्यैरस्मद्गुरोः सद्हृदयसुनिलयः प्रीयतां लक्ष्म्यधीशः ॥

**इति श्रीमद्वृन्दावनाचार्यश्रीविश्वप्रियतीर्थशिष्यश्रीमत्कोच्ची रंगप्पाचार्यविरचितायां ब्रह्मसूत्राधिकरणनयमालिकायां द्वितीयाध्यायस्य प्रथमः पादः**

(उपलब्धैकमात्रमूलकोशस्य अवशिष्टो भागः सुतरां शिथिलीभूतो मुद्रणायोग्य इत्यत्रैव समाप्यते ग्रन्थः)

# शुद्धाशुद्धपत्रम्



| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 6 | 26 | नाध्यायसंगतिः | नाध्यायासंगतिः |
| 7 | 1 | बाधते | बाधंते |
| | 8 | संवादेः न | संवादेन |
| | 12 | समन्वययोक्त | समन्वयस्योक्त |
| 11 | 17 | विरूपनित्यत्ये | विरूपनित्यये |
| | 20 | प्रामाण्यग्रहणे | प्रामाण्याग्रहणे |
| 13 | 6 | नेति पूर्वपक्ष | नेति वेति पूर्वपक्ष |
| | 8 | कारिर्यादि | कारीर्यादि |
| 18 | 5 | दित्यदि | दित्यादि |
| 19 | 18 | नतृ तीयादीनां | न तृतीयादीना |
| | 20 | सप्रगते | सप्तगते |
| 20 | 7 | द्याधिकरण | द्यधिकरण |
| | 12 | संख्यादि | सांख्यादि |
| 22 | 19 | प्राबल्यास्या | प्राबल्यस्या |
| | 23 | रोधशंका | रोधाशंका |
| 23 | 17 | कर्तृत्वाद्दिकं | कर्तृत्वादिकं |
| 24 | 2 | त्वत्य | त्वत्रत्य |
| 25 | 7 | विरुद्धर्म | विरुद्धधर्म |
| | 9 | जीवेश्वर | जीवस्येश्वर |
| | 16 | सिद्धावापि | सिद्धावपि |
| | 27 | अस्माद्रीत्या | अस्मद्रीत्या |
| 29 | 12 | ज्ञानेच्छदिकं | ज्ञानेच्छादिकं |
| 30 | 4 | भाप्योदाहत | भाष्योदाहृत |
| 30 | 17 | रूपयुक्ति | रूपायुक्ति |
| 33 | 15 | कारणानन्यत्वा | कारणानन्यत्व |
| 35 | 20 | जीवद्भवंति | जीवाद्भवंति |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 38 | 12 | प्रसक्त्यदि | प्रसक्त्यादि |
| 39 | 2 | तृष्णादान | तृणादान |
| | 16 | पुष्कर | पुष्पक |
| 46 | 21 | पस्यन् | पश्यन् |
| | 24 | वैष्म्यदि | वैषम्यादि |
| 48 | 22 | कर्तु हि | कर्तुं च |
| 51 | 18 | तार्किकल्पना | तार्किककल्पना |
| 56 | 24 | द्विधा | द्वेधा |
| | 26 | विष्यत्व | विषयत्व |
| 59 | 13 | प्रमाणासिद्ध | प्रमाणसिद्ध |
| 60 | 25 | पौनरुक्त्यार्थ | पौनरुक्त्यर्थ |
| 61 | 21 | प्रधानास्यापि | प्रधानस्यापि |
| | 22 | तृणोदेस्तदा | तृणादेस्तद |
| 62 | 14 | अयस्कांतदि | अयस्कांतादि |
| | 22 | सख्यै | सांख्यै |
| 73 | 12 | प्रामाण्यस्वीकारे | प्रामाण्यास्वीकारे |
| 75 | 8 | तिडन्त | तिङंत |
| 80 | 19 | धर्मा न | धर्मान् |
| 82 | 13 | विशिष्टसरूपो | विशिष्टरूपो |
| 88 | 20 | रेकोत्पत्ति | रेवोत्पत्ति |
| | 21 | भूत्वाभावनम् | भूत्वाभवनम् |
| | 27 | स्वरूपान्यभाव | स्वरूपान्यथाभाव |
| 89 | 2 | विशेष्यभिन्नम् | विशेष्याभिन्नम् |
| 89 | 6 | व्यकृताकाश | व्याकृताकाश |
| | 13 | देह | देहे |
| 91 | 2 | तेत्तेजो | तत्तेजो |
| | 6 | अकाशः | आकाशः |
| 93 | 1 | र्नित्वादुक्ति | र्नित्यत्वादुक्ति |
| 94 | 20 | त्यादिका | त्यादिकया |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 95 | 12 | त्वदिति | त्वादिति |
| 99 | 19 | मारकत्वादृष्टे | मारकत्वदृष्टे |
| 100 | 16 | अभिमान्यार्थे | अभिमान्यर्थे |
| 102 | 3 | क्रमत्वदिति | क्रमत्वादिति |
| 103 | 16 | प्रत्यांतस्य | प्रत्ययांतस्य |
| | 23 | भागविषये | भागविषय |
| 104 | 27 | उपच्चर | उपच्चय |
| 106 | 16 | रसदित्वेन | रसादित्वेन |
| 108 | 4 | करणावाच्छिन्न | करणावच्छिन्न |
| | 17 | अंशव्यक्त्य | अंशव्याप्त्या |
| | 18 | व्यास्त्यादिकं | व्याप्त्यादिकं |
| 115 | 11 | दित्यदि | दित्यादि |
| 116 | 27 | वह्न्यौष्णास्य | वह्न्यौष्ण्यस्य |
| 123 | 18 | विधानात् | विघातात् |
| | 22 | संबधितया | संबंधितया |
| 128 | 1 | त्याधिकरण | त्यधिकरण |
| 140 | 20 | श्यामत्वदिकं | श्यामत्वादिकं |
| 141 | 14 | प्रवाहानाद | प्रवाहानाद्य |
| 150 | 12 | श्रौत्रे | श्रोत्रे |
| 155 | 13 | दर्शगती | दर्शयती |
| 156 | 2 | द्रार्ष्टातिकस्य | दार्ष्टातिकस्य |
| 157 | 16 | सासे | प्रासे |
| 159 | 6 | नवोति | नवेति |
| | 14 | प्रविष्ये | प्रविश्ये |
| 160 | 13 | मांसादिति | मांसादीति |
| | 14 | अभिमानं | अभिधानं |
| | 16 | सित्युक्तम् | मित्युक्तम् |